# सर्वसिद्धान्तसंग्रहः

श्रीमच्छङ्कराचार्यविरचितः



पं० श्री सूर्यनारायण शुक्ल

महोदयेन संशोधितः प्रकाशितश्च

काश्यां

काशीविश्वनाथ मुद्रालये

मुद्रितः

मूल्यम् ।=)

३१ दिसंबर १९६०, शनिवार
(वाराणसी)



# सर्वसिद्धान्तसंग्रहः

## श्रीशंकराचार्यविरचितः

अथ उपोद्घातप्रकरणम् ।

वादिभिर्दर्शनैः सर्वैर्दृश्यते यत्त्वनेकधा ।
वेदान्तवेद्यं ब्रह्मेदमेकरूपमुपास्महे ॥ १ ॥
अङ्गोपाङ्गोपवेदाः स्युर्वेदस्यैवोपकारकाः ।
धर्मार्थकाममोक्षाणामाश्रयाः स्युश्चतुर्दश ॥ २ ॥
वेदाङ्गानि षडेतानि शिक्षा व्याकरणं तथा ।
निरुक्तं ज्यौतिषं कल्पश्छन्दोविचितिरित्यपि ॥ ३ ॥
मीमांसा न्यायशास्त्रं च पुराणं स्मृतिरित्यपि ।
चत्वार्येतान्युपाङ्गानि बहिरङ्गाणि तानि वै ॥ ४ ॥
आयुर्वेदोऽर्थवेदश्च धनुर्वेदस्तथैव च ।
गान्धर्ववेदश्चेत्येवमुपवेदाश्चतुर्विधाः ॥ ५ ॥
शिक्षा शिक्षयति व्यक्तं वेदोच्चारणलक्षणम् ।
वक्ति व्याकरणं तस्य संहिता पदलक्षणम् ॥ ६ ॥
वक्ति तस्य निरुक्तं तु पदनिर्वचनं स्फुटम् ।
ज्योतिः शास्त्रं वदत्यत्र कालं वैदिककर्मणाम् ॥ ७ ॥

क्रमं कर्मप्रयोगाणां कल्पसूत्रं प्रभाषते ।
मात्राक्षराणां संख्योक्ता छन्दोविचितिभिस्तथा ॥ ८ ॥
मीमांसा सर्ववेदार्थप्रविचारपरायणा ।
न्यायसूत्रं प्रमाणादिसर्वलक्षणतत्परम् ॥ ९ ॥
पुराणं नष्टशाखस्य वेदार्थस्योपबृंहणम् ।
कथारूपेण महता पुरुषार्थप्रवर्तकम् ॥ १० ॥
वर्णाश्रमानुरूपेण धर्माधर्मविभागतः ।
धर्मशास्त्रमनुष्ठेयधर्माणां तु नियामकम् ॥ ११ ॥
हेतुलिङ्गौषधस्कन्धैरायुरारोग्यदर्शकः ।
आयुर्वेदो ह्यनुष्ठेयः सर्वेषां तेन बोध्यते ॥ १२ ॥
अर्थवेदोऽन्नपानादिप्रदानमुखतत्परः ।
दक्षिणाज्यपुरोडाशचरुसंपादनादिभिः ॥ १३ ॥
तत्पालनाच्चचतुर्वर्गपुरुषार्थप्रसाधकः ।
धनुर्वेदो भवत्यत्र परिपन्थिनिरासकः ॥ १४ ॥
सप्तस्वरप्रयोगो हि सामगन्धर्ववेदयोः ।
समेतो लौकिको योगो वैदिकस्योपकारकः ॥ १५ ॥
अङ्गोपाङ्गोपवेदानामेव वेदैकशेषता ।
चतुर्दशसु विद्यासु मीमांसैव गरीयसी ॥ १६ ॥
विंशत्यध्याययुक्ता सा प्रतिपाद्यार्थतो द्विधा ।
कर्मार्था पूर्वमीमांसा द्वादशाध्यायविस्तृता ॥ १७ ॥
अस्यां सूत्रं जैमिनीयं शाबरं भाष्यमस्य तु ।
मीमांसावार्तिकं भाट्टं भट्टाचार्य कृतं हि तत् ॥ १८ ॥

तच्छिष्योऽप्यल्पभेदेन शबरस्य मतान्तरम् ।
प्रभाकरगुरुश्चक्रे तद्धि प्राभाकरं मतम् ॥ १९ ॥
भवत्युत्तरमीमांसा त्वष्टाध्यायी द्विधा च सा ।
देवताज्ञानकाण्डाभ्यां व्याससूत्रं द्वयोः समम् ॥ २० ॥
पूर्वाध्यायचतुष्केण मन्त्रवाच्यात्र देवता ।
संकर्षणोदिता तद्धि देवताकाण्डमुच्यते ॥ २१ ॥
भाष्यं चतुर्भिरध्यायैर्भगवत्पादनिर्मितम् ।
चक्रे विवरणं तस्य तद्वेदान्तं प्रचक्षते ॥ २२ ॥
अक्षपादः कणादश्च कपिलो जैमिनिस्तथा ।
व्यासः पतञ्जलिश्चैते वैदिकाः सूत्रकारकाः ॥ २३ ॥
बृहस्पत्यार्हतौ बुद्धो वेदमार्गविरोधिनः ।
एतेऽधिकारितां वीक्ष्य सर्वे शास्त्रप्रवर्तकाः ॥ २४ ॥
वेदाप्रामाण्यसिद्धान्ता बौद्धलोकायतार्हताः ।
युक्त्या निरसनीयास्ते वेदप्रामाण्यवादिभि ॥ २५ ॥

इति सर्वसिद्धान्तसंग्रहे प्रथममुपोद्धातप्रकरणम् ।

---

अथ लोकायतिकपक्षप्रकरणम् ।

लोकायतिकपक्षे तु तत्त्वं भूतचतुष्टयम् ।
पृथिव्यापस्तथा तेजो वायुरित्येव नापरम् ॥ १ ॥
प्रत्यक्षगम्यमेवास्ति नास्त्यदृष्टमदृष्टतः ।
अदृष्टवादिभिश्चापि नादृष्टं दृष्टमुच्यते ॥ २ ॥

क्वापि दृष्टमदृष्टं चेददृष्टं ब्रुवते कथम् ।
नित्यादृष्टं कथं सत्स्यात् शशशृङ्गादिभिः समम् ॥ ३ ॥
न कल्प्यौ सुखदुःखाभ्यां धर्माधर्मौ परैरिह ।
स्वभावेन सुखी दुःखी जनोऽन्यन्नैव कारणम् ॥ ४ ॥
शिखिनश्चित्रयेत्को वा कोकिलान् कः प्रकूजयेत् ।
स्वभावव्यतिरेकेण विद्यते नात्र कारणम् ॥ ५ ॥
स्थूलोऽहं तरुणो वृद्धो युवेत्यादिविशेषणैः ।
विशिष्टो देह एवात्मा न ततोऽन्यो विलक्षणः ॥ ६ ॥
जडभूतविकारेषु चैतन्यं यत्तु दृश्यते ।
ताम्बूलपूगचूर्णानां योगाद्राग इवोत्थितम् ॥ ७ ॥
इह लोकात्परो नान्यः स्वर्गोऽस्ति नरको न च ।
शिवलोकादयो मूढैः कल्प्यन्तेऽन्यैः प्रतारकैः ॥ ८ ॥
स्वर्गानुभूतिर्मृष्टाष्टिद्वयष्टवर्षवधूगमः ।
सूक्ष्मवस्त्रसुगन्धस्रक्चन्दनादिनिषेवणम् ॥ ९ ॥
नरकानुभवो वैरिशस्त्रव्याध्याद्युपद्रवः ।
मोक्षस्तु मरणं तच्च प्राणवायुनिवर्तनम् ॥ १० ॥
अतस्तदर्थं नायासं कर्तुमर्हति पण्डितः ।
तपोभिरुपवासाद्यैर्मूढ एव प्रशुष्यति ॥ ११ ॥
पातिव्रत्यादिसंकेतो बुद्धिमद्दुर्बलैः कृतः ।
सुवर्णभूमिदानादिमृष्टामन्त्रणभोजनम् ॥ १२ ॥
क्षुत्क्षामकुक्षिभिर्लोकैर्दरिद्रैरुपकल्पितम् ।
देवालयप्रपासत्रकूपारामादिकर्मणाम् ॥ १३ ॥

प्रशंसां कुर्वते नित्यं पान्था एव न चापरे ।
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ॥ १४ ॥
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ।
कृषिगोरक्षवाणिज्यदण्डनीत्यादिभिर्बुधः ॥
दृष्टैरेव सदोपायैर्भोगाननुभवेद् भुवि ॥ १५ ॥

इति सर्वसिद्धान्तसंग्रहे लोकायितिकपक्षो नाम द्वितीयं प्रकरणम् ।

---

अथार्हतपक्षप्रकरणम् ।

लोकायतिकपक्षोऽयमाक्षेप्यः सर्ववादिनाम् ।
स्वपक्षेण क्षिपत्येष तत्पक्षं क्षपणोऽधुना ॥ १ ॥
अग्नेरौष्ण्यमपां शैत्यं कोकिले मधुरः स्वरः ।
इत्याद्येकप्रकारः स्यात् स्वभावो नापरः क्वचित् ॥ २ ॥
कादाचित्कं सुखं दुःखं स्वभावो नात्मनो मतः ।
धर्माधर्मवतस्ताभ्यामदृष्टाविति निश्चितौ ॥ ३ ॥
अदृष्टस्यात्र दृष्टत्वे नादृष्टत्वं भवेदिति ।
त्वयोक्तदोषो न स्यान्मे तत्सिध्यत्यागमाद्यतः ॥ ४ ॥
अदृष्टमग्निमादातुं धूमं दृष्ट्वोपधावता ।
धूमेनाग्न्यनुमानं तु त्वयाप्यङ्गीकृतं ननु ॥ ५ ॥
प्रत्यक्षेणानुमानेन पश्यन्त्यत्रागमेन च ।
दृष्टादृष्टं जनाः स्पष्टमार्हतागमसंस्थिताः ॥ ६ ॥

सिद्धा बद्धा नारकीया इति स्युः पुरुषास्त्रिधा ।
केचित्परमसिद्धाः स्युः केचिन्मन्त्रैर्महौषधैः ॥ ७ ॥
गुरूपदिष्टमार्गेण ज्ञानकर्मसमुच्चयात् ।
मोक्षो बन्धाद्विरक्तस्य जायते भुवि कस्य चित् ॥ ८ ॥
अर्हतामखिलं ज्ञातुं कर्मार्जितकलेवरैः ।
आवृतिर्बन्धनं मुक्तिर्निरावरणतात्मनाम् ॥ ९ ॥
पुद्गलापरसंज्ञैस्तु धर्माधर्मानुगामिभिः ।
परमाणुभिराबद्धाः सर्वदेहाः सहेन्द्रियैः ॥ १० ॥
स्वदेहमाना ह्यात्मानो मोहाद्देहाभिमानिनः ।
क्रिमिकीटादिहस्त्यन्तदेहपञ्जरवर्तिनः ॥ ११ ॥
आत्मावरणदेहस्य वस्त्राद्यावरणान्तरम् ।
नह्ययं यदि गृह्णाति तस्यापीत्यनवस्थितिः ॥ १२ ॥
प्राणिजातमहिंसन्तो मनोवाक्कायकर्मभिः ।
दिगम्बराश्चरन्त्येव योगिनो ब्रह्मचारिणः ॥ १३ ॥
मयूरपिच्छहस्तास्ते कृतवीरासनादिकाः ।
पाणिपात्रेण भुञ्जाना लूनकेशाश्च मौनिनः ॥ १४ ॥
मुनयो निर्मलाः शुद्धाः प्रणताघौघभेदिनः ।
तदीयमन्त्रफलदो मोक्षमार्गे व्यवस्थितः ॥
सर्वैर्विश्वसनीयः स्यात् स सर्वज्ञो जगद्गुरुः ॥ १५½ ॥

इति सर्वसिद्धान्तसंग्रहे आर्हतपक्षो नाम तृतीयं प्रकरणम् ।

---

## अथ बौद्धपक्षप्रकरणम् ।

### माध्यमिकमतम् ।

बौद्धाः क्षपणकाचार्यप्रणीतमपि सांप्रतम् ।
पक्षं प्रतिक्षिपन्त्येव लोकायतमतं तथा ॥ १ ॥
चतुर्णां मतभेदेन बौद्धशास्त्रं चतुर्विधम् ।
अधिकारानुरूपेण तत्र तत्र प्रवर्तकम् ॥ २ ॥
ज्ञानमेव हि सा बुद्धिर्नचान्तः करणं मतम् ।
जानाति बुद्ध्यते चेति पर्यायत्वप्रयोगतः ॥ ३ ॥
त्रयाणामत्र बौद्धानां बुद्धिरस्त्यविवादतः ।
बाह्यार्थोऽस्ति द्वयोरेव विवादोऽन्यत्र तद्यथा ॥ ४ ॥
प्रत्यक्षसिद्धं बाह्यार्थमसौ वैभाषिकोऽब्रवीत् ।
बुद्ध्याकारानुमेयोऽर्थो बाह्यः सौत्रान्तिकोदितः ॥ ५ ॥
बुद्धिमात्रं वदत्यत्र योगाचारो न चापरम् ।
नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल ॥ ६ ॥
न सन्नासन्न सदसन्नचोभाभ्यां विलक्षणम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ ७ ॥
यदसत्कारणैस्तन्न जायते शशशृङ्गवत् ।
सतश्चोत्पत्तिरिष्टा चेज्जनितं जनयेदलम् ॥ ८ ॥
एकस्य सदसद्भावो वस्तुनो नोपपद्यते ।
एकस्य सदसद्भ्योऽपि वैलक्षण्यं न युक्तिमत् ॥ ९ ॥
चतुष्कोटिविनिर्मुक्तं शून्यं तत्त्वमितिस्थितम् ।
जातिर्जातिमतो भिन्ना न वेत्यत्र विचार्यते ॥ १० ॥

भिन्ना चेत्सा न गृह्येत व्यक्तिभ्योऽङ्गुष्ठवत्पृथक् ।
अविचारितसंसिद्धा व्यक्तिः सा पारमाणुकी ॥ ११ ॥
स्वरूपं परमाणूनां वाच्यं वैशेषिकादिभिः ।
षट्केन युगपद्योगे परमाणोष्षडंशता ॥ १२ ॥
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ।
ब्राह्मणत्वादिजातिः किं वेदपाठेन जन्यते ॥ १३ ॥
संस्कारैर्वा द्वयेनाथ तत्सर्वं नोपपद्यते ।
वेदपाठेन चेत्कश्चित् शूद्रो देशान्तरं गतः ॥ १४ ॥
सम्यक् पठितवेदोऽपि ब्राह्मणत्वमवाप्नुयात् ।
सर्वसंस्कारयुक्तोऽत्र लोके विप्रो न दृश्यते ॥ १५ ॥
चत्वारिंशत्तु संस्काराः विप्रस्य विहिता यतः ।
एकसंस्कारयुक्तश्चेद्विप्रः स्यादखिलो जनः ॥ १६ ॥
जातिव्यक्त्यात्मकोऽर्थोत्र नास्त्येवेति निरूपिते ।
विज्ञानमपि नास्त्येव ज्ञेयाभावे समुत्थिते ।
इति माध्यमिकेनैव सर्वशून्यं विचारितम् ॥ १७½ ॥

इति बौद्धपक्षे माध्यमिकमतम् ।

---

अथ योगाचारमतम् ।

इति माध्यमिकेनोक्तं शून्यत्वं शून्यवादिना ।
निरालम्बनवादी तु योगाचारो निरस्यति ॥ १ ॥
त्वयोक्तसर्वशून्यत्वे प्रमाणं शून्यमेव ते ।
अतो वादेऽधिकारस्ते न परेणोपपद्यते ॥ २ ॥

स्वपक्षस्थापनं तद्वत्परपक्षस्य दूषणम् ।
कथं करोत्यत्र भवान् विपरीतं वदेन्न किम् ॥ ३ ॥
अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ ४ ॥
मानमेयफलाद्युक्तं ज्ञानदृष्ट्यनुसारतः ।
अधिकारिषु जातेषु तत्त्वमप्युपदेक्ष्यति ॥ ५ ॥
बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थतः ।
प्रतिभानस्य नानात्वान्न चैकत्वं विहन्यते ॥ ६ ॥
परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपं कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥ ७ ॥
अथाप्येकैव सा बाला बुद्धितत्त्वं तथैव नः ।
तदन्यद्यत्तु जात्यादि तन्निराक्रियतां त्वया ॥ ८ ॥
क्षणिका बुद्धिरेवातस्त्रिधा भ्रान्तैर्विकल्पिता ।
स्वयम्प्रकाशतत्त्वज्ञैर्मुमुक्षुभिरुपास्यते ॥ ९ ॥

इति बौद्धपक्षे योगाचारमतम् ।

---

अथ सौत्रान्तिकमतम् ।

विज्ञानमात्रमत्रोक्तं योगाचारेण धीमता ।
ज्ञानं ज्ञेयं विना नास्ति बाह्यार्थोऽप्यस्ति तेन नः ॥ १ ॥
नीलपीतादिभिश्चित्रैर्बुद्ध्याकारैरिहान्तरैः ।
सौत्रान्तिकमते नित्यं बाह्यार्थस्त्वनुमीयते ॥ २ ॥

क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥ ३ ॥
षडंशत्वं त्वयापाद्य परमाणोर्निराकृतिः ।
युक्तस्तेनापि बाह्यार्थो न चेज्ज्ञानं न सम्भवेत् ॥ ४ ॥
आकाशधातुरस्माभिः परमाणुरितीरितः ।
स च प्रज्ञप्तिमात्रं स्यान्न च वस्त्वन्तरं मतम् ॥ ५ ॥
सर्वे पदार्थाः क्षणिका बुद्ध्याकारविजृम्भिताः ।
इदमित्येव भावास्तेऽप्याकारानुमितास्सदा ॥ ६ ॥
विषयत्वविरोधस्तु क्षणिकत्वेऽपि नास्ति नः ।
विषयत्वं हि हेतुत्वं ज्ञानाकारार्पणक्षमम् ॥७॥

इति बौद्धपक्षे सौत्रान्तिकमतम् ।

---

अथ वैभाषिकमतम् ।

सौत्रान्तिकमतादल्पभेदो वैभाषिके मते ।
प्रत्यक्षत्वं तु बाह्यस्य क्वचिदेवानुमेयता ॥१॥
पूर्वापरानुभावेन पुञ्जीभूताः सहस्रशः ।
परमाणव एवात्र बाह्यार्थघनवत् स्थिताः ॥२॥
दूरादेव वनं पश्यन् गत्वा तस्यान्तिकं पुनः ।
न वनं पश्यति क्वापि वल्लीवृक्षातिरेकतः ॥३॥
मृदो घटत्वमायान्ति कपालत्वं तु ते घटाः ।
कपालानि च चूर्णत्वं ते पुनः परमाणुताम् ॥४॥

चतुर्णामपि बौद्धानामैक्यमध्यात्मनिर्णये ।
व्यावहारिकभेदेन विवदन्ते परस्परम् ॥५॥
बुद्धितत्त्वे स्थिता बौद्धा बुद्धिवृत्तिर्द्विधा मता ।
ज्ञानाज्ञानात्मिका चेति तत्र ज्ञानात्मिकामिह ॥६॥
प्रमाणत्वेन जानन्ति ह्यविद्यामूलिकाप्रमा ।
मूलाज्ञाननिमित्तान्या स्कन्धायतनधातुजा ॥७॥
प्रपञ्चजातमखिलं शरीरं भुवनात्मकम् ।
पञ्चस्कन्धा भवन्त्यत्र द्वादशायतनानि च ॥८॥
सर्वेषामपि बौद्धानां तथाष्टादश धातवः ।
ज्ञानसंस्कारसंज्ञानां वेदनारूपयोरपि ॥९॥
समूहः स्कन्धशब्दार्थस्तत्तत्सन्ततिवाचकः ।
ज्ञानसन्ततिरेवात्र विज्ञानस्कन्ध उच्यते ॥१०॥
संस्कारस्कन्ध इत्युक्तो वासनानां तु संहतिः ।
सुखदुःखात्मिका बुद्धिस्तथापेक्षात्मिका च सा ॥ ११ ॥
वेदनास्कन्ध इत्युक्तः संज्ञास्कन्धस्तु नाम यत् ।
रूपस्कन्धो भवत्यत्र मूर्तिभूतस्य संहतिः ॥ १२ ॥
रूपस्योपचयः स्तम्भकुम्भादिरणुकल्पितः ।
पृथिव्याः स्थैर्यरूपादि द्रवत्वादि भवेदपाम् ॥ १३ ॥
उष्णत्वं तेजसो धातोर्वायुधातोस्तु शीतता ।
एषां चतुर्णां धातूनां वर्णगन्धरसौजसाम् ॥ १४ ॥
पिण्डाज्जाताः पृथिव्याद्याः परमाणुचया अमी ।
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं प्रत्ययपञ्चकम् ॥१५॥

वाक्पादपाणिपाय्वादि ज्ञेयं कारकपञ्चकम् ।
सामुदायिकचैतन्यं बुद्धिः स्यात्करणं मनः ॥ १६ ॥
नामजातिगुणद्रव्यक्रियारूपेण पञ्चधा ।
कल्पितं भ्रान्तदृष्टयैव शरीरभुवनात्मकम् ॥ १७ ॥
बौद्धशास्त्रप्रमेयं तु प्रमाणं द्विविधं मतम् ।
कल्पनापोढमभ्रान्तं प्रत्यक्षं कल्पना पुनः ॥ १८ ॥
नामजातिगुणद्रव्यक्रियारूपेण पञ्चधा ।
लिङ्गदर्शनतो ज्ञानं लिङ्गिन्यत्रानुमानता ॥ १९ ॥
चतुर्विधं यदज्ञानं प्रमाणाभ्यां निवर्तते ।
नष्टे चतुर्विधेऽज्ञाने मूलाज्ञानं निवर्तते ॥ २० ॥
मूलाज्ञाननिवृत्तौ च विशुद्धज्ञानसन्ततिः ।
शुद्धबुद्धयविशेषो हि मोक्षो बुद्धमुनीरितः ॥ २१ ॥
उत्पत्तिस्थितिभङ्गदोषरहितां सर्वाशयोन्मूलिनीं
ग्राहोत्सर्गवियोगयोगजनितां नाभावभावान्विताम् ।
तामन्तर्द्वयवर्जितां निरुपमामाकाशवन्निर्मलां
प्रज्ञां पारमितां धनस्य जननीं शृण्वन्तु बुद्धयर्थिनः ॥२२॥
अतिस्तुतिपरैरुक्तो यस्तु वैशेषिकादिभिः ।
ईश्वरो नेष्यतेऽस्माभिः, स निराक्रियतेऽधुना ॥ २३ ॥
हेयोपादेयतत्त्वं च मोक्षोपायं च वेत्ति यः ।
स एव नः प्रमाणं स्यान्न सर्वज्ञस्त्वयेरितः ॥ २४ ॥
दूरं पश्यतु वा मा वा तत्त्वमिष्टं प्रपश्यतु ।
प्रमाणं दूरदर्शी चेद्वयं गृध्रानुपास्महे ॥ २५ ॥

देशे पिपीलिकादीनां संख्याज्ञः कश्चिदस्ति किम् ।
सर्वकर्तृत्वमीशस्य कथितं नोपपद्यते ॥ २६ ॥
यदि स्यात्सर्वकर्तासावधर्मेऽपि प्रवर्तयेत् ।
अयुक्तं कारयंल्लोकान् कथं युक्ते प्रवर्तयेत् ॥ २७ ॥
उपेक्षैव च साधूनां युक्ता साधौ क्रिया भवेत् ।
न ह्यतद्दारविक्षेपः साधूनां साधुचेष्टितम् ॥ २८ ॥
ईश्वरेणैव शास्त्राणि सर्वाण्यधिकृतानि चेत् ।
कथं प्रमाणं तद्वाक्यं पूर्वापरपराहतम् ॥ २९ ॥
कारयेद्धर्ममात्रं चेदेकशास्त्रप्रवर्तकः ।
कथं प्रादेशिकस्यास्य सर्वकर्तृत्वमुच्यते ॥ ३० ॥
ईशः प्रयोजनाकाङ्क्षी जगत्सृजति वा न वा ।
काङ्क्षते चेदसंपूर्णो नो चेन्नैव प्रवर्तते ॥ ३१ ॥
प्रवर्तते किमीशस्ते भ्रान्तवन्निष्प्रयोजने ।
छागादीनां पुरीषादेर्वर्तुलीकरणेन किम् ॥ ३२ ॥
क्रीडार्थेयं प्रवृत्तिश्चेत् क्रीडते किन्नु बालवत् ।
अजस्रं क्रीडतस्तस्य दुःखमेव भवत्यलम् ॥ ३३ ॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव च ॥ ३४ ॥
तप्तलोहाभितापाद्यैरीशेनाल्पसुखेच्छुना ।
प्राणिनो नरके कष्टं वत प्राणैर्वियोजिताः ॥ ३५ ॥
वरप्रदाने शक्तश्चेत् ब्रह्महत्यादिकारिणे ।
स्वर्गं दद्यात् स्वतन्त्रः स्यान्नरकं सोमयाजिने ॥ ३६ ॥

कर्मानुगुणदाता चेदीशः स्यादखिलो जनः ।
दाने स्वातन्त्र्यहीनः सन् सर्वेशः कथमुच्यते ॥ ३७ ॥
एवं नैयायिकाद्युक्तसर्वज्ञेशनिराक्रिया ।
हेयोपादेयमात्रज्ञो ग्राह्यो बुद्धमुनिस्ततः ॥ ३८ ॥
चैत्यं वन्देत चैत्याद्या धर्मा बुद्धागमोदिताः ।
अनुष्ठेया न यागाद्या वेदाद्यागमचोदिताः ॥ ३९ ॥
क्रियायां देवतायां च योगे शून्यपदे क्रमात् ।
वैभाषिकादयो बौद्धाः स्थिताश्चत्वार एव ते ॥ ४० ॥

इति बौद्धपक्षे वैभाषिकमतम् ।

## सर्वसिद्धान्तसंग्रहे बौद्धपक्षो नाम
## चतुर्थं प्रकरणम्

लोकायतार्हतमाध्यमिकयोगाचारसौत्रान्तिकवैभाषिकमतानि षट् समाप्तानि ।

---

अथ वैशेषिक पक्षः ।

नास्तिकान् वेदबाह्यांस्तान् बौद्धलौकायतार्हतान् ।
निराकरोति वेदार्थवादी वैशेषिकोऽधुना ॥ १ ॥
वेदमार्गपरिभ्रष्टाः विशिष्टाः परदर्शने ।
बौद्धादयो विशिष्टास्ते न भवन्ति द्विजाः पुनः ॥ २ ॥
अतो बुद्धादिभिर्नित्यं वेदब्राह्मणनिन्दया ।
आत्मवञ्चकता कष्टा सर्वत्राघोषिता भुवि ॥ ३ ॥

प्रमाणमेव वेदाः स्युः सर्वेश्वरकृतत्वतः ।
स एव कर्मफलदो जीवनां पारिशेष्यतः ॥४॥
जीवा वा जीवकर्माणि प्रकृतिः परमाणवः ।
नेशते ह्यत्र जीवानां तत्तत्कर्मफलार्पणे ॥५॥
जीवाः कर्मफलावाप्तौ शक्ताश्चेत्स्वसुखे रताः ।
अप्रार्थितानि दुःखानि वारयन्तु प्रयत्नतः ॥६॥
अशक्तान्यत्र कर्माणि जीवानां स्वफलार्पणे ।
अचेतनत्वादगतेः स्वर्गादिफलभूमिषु ॥७॥
नाचेतनत्वात्प्रकृतेः फलदातृत्वसम्भवः ।
अचेतनाः फलं दातुमशक्ताः परमाणवः ॥८॥
कालोऽप्यचेतनस्तेषां न हि कर्मफलप्रदः ।
अतोऽन्यः फलदो लोके भवत्येभ्यो विलक्षणः ॥९॥
स तु प्राणविशेषाँश्च देशानपि तदाश्रयान् ।
जानन् सर्वज्ञ एवेष्टो नान्ये बौद्धादिसम्मताः ॥१०॥
अजानन् प्राणिनो लोके हेयोपादेयमात्रवित् ।
प्रादेशिको न सर्वज्ञो नास्मदादिविलक्षणः ॥११॥
वेदैकदेशं दृष्ट्वा तु कारीरीवृष्टिबोधकम् ।
अदृष्टयोश्च विश्वासः कार्यः स्वर्गापवर्गयोः ॥१२॥
कारीरीष्ट्युक्तवृष्टिश्च द्रष्टव्या दृष्टनिर्णये ।
चित्रादेः पुत्रपश्वाप्तिर्द्रष्टव्यादृष्टनिर्णये ॥१३॥
ज्योतिः शास्त्रोक्तकालस्य ग्रहणं तन्निदर्शनम् ।
दृष्टैकदेशप्रामाण्यं यत्तक्तं सौगतादिभिः ॥१४॥

तच्च वेदादपहृतं सर्वलोकप्रतारकैः ।
मन्त्रव्याकरणं दृष्ट्वा मन्त्रा विरचिताः पुनः ॥१५॥
लिपिसंमिश्रजातास्ते सिद्धमन्त्रास्तथा कृताः ।
बौद्धागमेभ्यो दृष्टार्था न हृता वैदिकैः क्वचित् ॥१६॥
वेदस्यैव षडङ्गानि यतः शिक्षादिकानि वै ।
नान्यागमाङ्गता तेषां न काप्युक्ता परैरपि ॥१७॥
अतो वेदबलीयस्त्वं नास्तिकागमसंचयात् ।
षट्पदार्थपरिज्ञानान्मोक्षं वैशेषिका विदुः ॥१८॥
तदन्तर्गत एवेशो जीवाः सर्वमिदं जगत् ।
द्रव्यं गुणास्तथा कर्म सामान्यं यत्परापरम् ॥१९॥
विशेषः समवायश्च षट् पदार्था इहेरिताः ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥२०॥
दिक्कालात्ममनांसीति नव द्रव्याणि तत्र ते ।
पृथिवी गन्धवत्यापः सरसास्तेजसः प्रभा ॥२१॥
अनुष्णाशीतसंस्पर्शो वायुः शब्दगुणं नभः ।
दिक् पूर्वापरधीलिङ्गा कालः क्षिप्रचिरागतः ।२२॥
आत्माहंप्रत्ययात्सिद्धो मनोऽन्तः करणं मतम् ।
अयोगमन्ययोगं च मुक्त्वा द्रव्याश्रिता गुणाः ॥२३॥
चतुर्विंशतिधा भिन्ना गुणास्तेऽपि यथाक्रमात् ।
शब्दः स्पर्शो रसो रूपं गन्धसंयोगवेगताः ॥२४॥
संख्याद्रवत्वसंस्कारपरिमाणविभागताः ।
प्रयत्नसुखदुःखेच्छा बुद्धिद्वेषपृथक्त्वताः ॥२५॥

परत्वं चापरत्वं च धर्माधर्मौ च गौरवम् ।
इमे गुणाश्चतुर्विंशत्यथ ? कर्म च पञ्चधा ॥२६॥
प्रसाराकुञ्चनोत्क्षेपा गत्यवक्षेपणे इति ।
परंचापरमित्यत्र सामान्यं द्विविधं मतम् ॥२७॥
परं सत्तादि सामान्यं द्रव्यत्वाद्यपरं मतम् ।
परस्परविवेकोऽत्र द्रव्याणां यैस्तु गम्यते ॥२८॥
विशेषा इति ते ज्ञेया द्रव्यमेव समाश्रिताः ।
संबन्धः समवायःस्यात् द्रव्याणां तु गुणादिभिः ॥२९॥
षट् पदार्था इमे ज्ञेयास्तन्मयं सकलं जगत् ।
तेषां साधर्म्यवैधर्म्यज्ञानं मोक्षस्य साधनम् ॥३०॥
द्रव्यान्तर्गत एवात्मा भिन्नो जीवपरत्वतः ।
देवा मनुष्यास्तिर्यञ्चो जीवास्त्वन्यो महेश्वरः ॥३१॥
तदाज्ञप्रक्रियां कुर्वन्मुच्यतेऽन्यस्तु बध्यते ।
श्रुतिस्मृतीतिहासाद्यं पुराणं भारतादिकम् ॥३२॥
ईश्वराज्ञेति विज्ञेया न लङ्घ्या वैदिकी क्वचित् ।
त्रिधा प्रमाणं प्रत्यक्षमनुमानागमाविति ॥३३॥
त्रिभिरेतैः प्रमाणैस्तु जगकर्तावगम्यते ।
तस्मात्तदुक्तकर्माणि कुर्यात्तस्यैव तृप्तये ॥ ३४ ॥
भक्त्यैवावर्जनीयोऽसौ भगवान्परमेश्वरः ।
तत्प्रसादेन मोक्षः स्यात्करणोपरमात्मकः ॥ ३५ ॥
करणोपरमे त्वात्मा पाषाणवदवस्थितः ।
दुःखसाध्यः सुखोच्छेदो दुःखोच्छेदवदेव नः ॥ ३६ ॥

अतः संसारनिर्विण्णो मुमुक्षुर्मुच्यते जनः ।
पश्चान्नैयायिकस्तर्कैः साधयिष्यति नः शिवम् ॥ ३७
नातिभिन्नं मतं यस्मादावयोर्वेदवादिनोः ॥ ३७½ ॥

इति सर्वसिद्धान्तसंग्रहे वैशेषिकपक्षो नाम पञ्चमं प्रकरणम् ।

---

अथ नैयायिकपक्षः ।

नैयायिकस्य पक्षोऽथ संक्षेपात्प्रतिपाद्यते ।
यत्तर्करक्षितो वेदो ग्रस्तः पाखण्डदुर्जनैः ॥ १ ॥
अक्षपादः प्रमाणादिषोडशार्थप्रबोधनात् ।
जीवानां मुक्तिमाचष्टे प्रमाणं च प्रमेयता ॥ २ ॥
निर्णयः संशयोऽन्यश्च प्रयोजननिदर्शने ।
सिद्धान्तावयवौ तर्को वादो जल्पो वितण्डता ॥ ३ ॥
हेत्वाभासश्छलं जातिर्निग्रहस्थानमित्यपि ।
प्रत्यक्षमनुमानाख्यमुपमानागमाविति ॥ ४ ॥
चत्वार्यत्र प्रमाणानि नोपमानं तु कस्यचित् ।
प्रत्यक्षमस्मदादीनामस्त्यन्यद्योगिनामपि ॥ ५ ॥
पश्यन्ति योगिनः सर्वमीश्वरस्य प्रसादतः ।
स्वभावेनेश्वरः सर्वं पश्यति ज्ञानचक्षुषा ॥ ६ ॥
यत्नेनापि न जानन्ति सर्वेशं मांसचक्षुषः ।
ईश्वरं साधयत्येतदनुमानमितिस्फुटम् ॥ ७ ॥
भूर्भूधरादिकं सर्वं सर्वविद्धेतुकं मतम् ।
कार्यत्वाद्घटवच्चेति जगत्कर्तानुमीयते ॥ ८ ॥

कार्यत्वमप्यसिद्धं चेत् क्ष्मादेः सावयवत्वतः ।
घटकुड्यादिवच्चेति कार्यत्वमपि साध्यते ॥ ९ ॥
दृष्टान्तसिद्धदेहादेर्धर्माधर्मप्रसङ्गतः ।
न विशेषविरोधोऽत्र वाच्यो भट्टादिभिः क्वचित् ॥१०॥
उत्कर्षसमजातित्वात् सम्यग्दोषो न तादृशः ।
कार्यत्वमात्रात्कर्तृत्वमात्रमेवानुमीयते ॥११॥
दृष्टान्तस्थविशेषैस्त्वं विरोधं यदि भाषसे
धूमेऽग्न्यनुमानस्याप्यभावोपि प्रसज्यते ।१२।
अशरीरोऽपि कुरुते शिवः कार्यमिहेच्छया ।
देहानपेक्षो देहं स्वं यथा चेष्टयते जनः ।१३॥
इच्छाज्ञानप्रयत्नाख्या महेश्वरगुणास्त्रयः ।
शरीररहितेपि स्युः परमाणुस्वरूपवत् ॥१४॥
कार्यं क्रियां विना नात्र सा क्रिया यत्नपूर्विका ।
क्रियात्वात् साध्यतेऽस्माभिरस्मदादिक्रिया यथा ॥१५॥
सर्वज्ञीयक्रियोद्भूतक्ष्मादिकार्योपपत्तिभिः ।
ईश्वरासत्त्वमुक्तं यन्निरस्तं पारिशेष्यतः ॥१६॥
यथा वैशेषिकेणेशः पारिशेष्येण साधितः ।
तत्तर्कोत्रानुसंधेयः समानं शास्त्रमावयोः ॥ १७ ॥
कालकर्मप्रधानादेरचैतन्याच्छिवोऽपरः ।
अल्पज्ञत्वात्तु जीवानां ग्राह्यः सर्वज्ञ एव सः ॥ १८ ॥
सर्वज्ञेशप्रणीतत्वाद्वेदप्रामाण्यमिष्यते ।
स्मृत्यादीनां प्रमाणत्वं तन्मूलत्वेन सिध्यति ॥ १९ ॥

श्रौतं स्मार्तं च यत्कर्म यथावदिह कुर्वताम् ।
स्वर्गापवर्गौ स्यातां हि नैव पाषण्डिनां क्वचित् ॥ २० ॥
त्रियम्बकादिभिर्मन्त्रैरपि देवो महेश्वरः ।
अनुष्ठानोपयुक्तार्थस्मारकैः प्रतिपाद्यते ॥ २१ ॥
कारीरीष्ट्यर्थवृष्ट्यादि दृष्ट्वा स्वर्गापवर्गयोः ।
विश्वासोऽदृष्टयोः कार्यः कारणाद्यैः प्रपञ्चितः ॥ २२ ॥
अप्रमाणमशेषं च शास्त्रं बुद्धादिकल्पितम् ।
स्यादनाप्तप्रणीतत्वादुन्मत्तानां यथा वचः ॥ २३ ॥
बीजप्ररोहरक्षायै वृतिः कण्टकिनी यथा ।
वेदार्थतत्त्वरक्षार्थं वृतिर्न्यायमयी तथा ॥ २४ ॥
प्रमानुग्राहकस्तर्कः स कथात्रयसंवृतः ।
वादो जल्पो वितण्डेति तिस्र एव कथा मताः ॥ २५ ॥
आचार्येण तु शिष्यस्य वादस्तत्त्वबुभुत्सया ।
जयः पराजयो नात्र तौ तु जल्पवितण्डयोः ॥ २६ ॥
वादी च प्रतिवादी च प्राश्निकश्च सभापतिः ।
चत्वार्यङ्गानि जल्पस्य वितण्डायास्तथैव च ॥ २७ ॥
सदुत्तरापरिज्ञानात्पराजयभये सति ।
जयेच्छलेन जात्या वा प्रतिवादी तु वादिनम् ॥ २८ ॥
छलं जातिं ब्रुवाणस्य निग्रहस्थानमीरयेत् ।
निग्रहस्थानमित्युक्तं कथाविच्छेदकारकम् ॥ २९ ॥
तत्रोपचारसामान्यवाक्पूर्वं त्रिविधं छलम् ।
चतुर्वेदविदित्युक्ते कस्मिंश्चिद्वादिना द्विजे ॥ ३० ॥

किमत्र चित्रं ब्राह्मण्ये चतुर्वेदज्ञतोचिता ।
एवं सामान्यदृष्ट्या तु दूषिते प्रतिवादिना ॥ ३१ ॥
वदेद्वाक्यैरनेकान्तं निग्रहस्थानमप्यथ ।
नववस्त्रो वटुश्चेति वाद्युक्ते तत्र वाक्छलम् ॥ ३२ ॥
कुतोऽस्य नववासांसीत्याचक्षाणस्य निग्रहः ।
तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् ॥ ३३ ॥
स्वस्य व्याघातकं वाक्यं दूषणाक्षममेव वा ।
उत्तरं जातिरित्याहुश्चतुर्विंशतिभेदभाक् ॥ ३४ ॥
चतुर्विंशतिजातीनां प्रयोक्तुः प्रतिवादिनः ।
वक्तव्यं निग्रहस्थानमसदुत्तरवादिनः ॥ ३५ ॥
यथा साधर्म्यवैधर्म्योत्समोत्पकर्षापकर्षतः ।
वर्ण्यावर्ण्यविकल्पाश्च प्राप्त्यप्राप्तीतिसाध्यताः ॥ ३६ ॥
प्रसङ्गप्रतिदृष्टान्तावनुत्पत्तिश्च संशयः ।
अर्थापत्त्यविशेषौ च हेतुप्रकरणाह्वयौ ॥ ३७ ॥
कार्योपलब्ध्यनुपलब्धिनित्यानित्याश्च जातयः ।
साम्यापादकहेतुत्वात्समता जातयो मताः ॥ ३८ ॥
सदुत्तरापरिज्ञाने स्यादेकान्तपराजयः ।
एवं जल्पवितण्डाभ्यां वेदबाह्यान्निरस्य तु ॥ ३९ ॥
वेदैकविहितं कर्म कुर्यादीश्वरतृप्तये ।
तत्प्रसादात्प्रयोगेन मुमुक्षुर्मोक्षमाप्नुयात् ॥ ४० ॥
नित्यानन्दानुभूतिः स्यान्मोक्षे तु विषयादृते ।
वरं वृन्दावने रम्ये शृगालत्वं वृणोम्यहम् ॥ ४१ ॥

वैशेषिकोक्तमोक्षात्तु सुखलेशविवर्जितात् ।
यो वेदविहितैर्यज्ञैरीश्वरस्य प्रसादतः ॥ ४२ ॥
मूर्च्छामिच्छति यत्नेन पाषाणवदवस्थितिम् ।
मोक्षो हि हरिभक्त्याप्तयोगेनेति पुरोदितः ॥ ४३ ॥
अष्टावङ्गानि योगस्य यमोऽथ नियमस्तथा ।
आसनं पवनायामः प्रत्याहारोऽथ धारणम् ॥ ४४ ॥
ध्यानं समाधिरित्येवं तत्सांख्यो विस्तरिष्यति ॥ ४४½ ॥

इति सर्वसिद्धान्तसंग्रहे नैयायिकपक्षो नाम षष्ठं प्रकरणम् ।

---

अथ प्रभाकरपक्षः ।

प्रभाकरगुरोः पक्षः संक्षेपादथ कथ्यते ।
तुष्टाव पूर्वमीमांसामाचार्यस्पर्धयापि यः ॥ १ ॥
द्रव्यं गुणास्तथा कर्म सामान्यं परतन्त्रता ।
पञ्चार्थाश्शक्तिसादृश्यसंख्याभिस्त्वष्टधा स्मृताः ॥ २ ॥
न विशेषो न चाभावो भूतलाद्यतिरेकत ।
वेदैकविहितं कर्म मोक्षदं नापरं गुरोः ॥ ३ ॥
बध्यते स हि लोकस्तु यः काम्यप्रतिषिद्धकृत् ।
विध्यर्थवादमन्त्रैश्च नामधेयैश्चतुर्विधः ॥ ४ ॥
वेदो विधिप्रधानोऽयं धर्माधर्मावबोधकः ।
आत्मा ज्ञातव्य इत्यादिविधयस्त्वारुणे स्थिताः ॥ ५ ॥
यथावदात्मनां तत्र बोधं विदधते स्फुटम् ।
बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः ॥ ६ ॥

नानाभूतः प्रतिक्षेत्रमर्थज्ञानेषु भासते ।
घटं जानाम्यहं स्पष्टमित्यत्र युगपत्त्रयम् ॥ ७ ॥
घटो विषयरूपेण कर्ताहंप्रत्ययागतः ।
स्वयंप्रकाशरूपेण ज्ञानं भाति जनस्य हि ॥ ८ ॥
करणोपरमान्मुक्तिमाह वैशेषिको यथा ।
दुःस्सहापारसंसारसागरोत्तरणोत्सुकः ॥ ९ ॥
प्रयत्नसुखदुःखेच्छाधर्माधर्मादिनाशतः ।
पाषाणवदवस्थानमात्मनो मुक्तिमिच्छति ॥ १० ॥
दुःखसाध्यसुखोच्छेदो दुःखोच्छेदवदिष्यते ।
नित्यानन्दानुभूतिश्च निर्गुणस्य न चेष्यते ॥ ११ ॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसंज्ञिनाम् ।
अन्यः संन्यासिनां मार्गो जाघटीति न कर्मिणाम् ॥ १२ ॥
तस्माद्यागादयो धर्माः कर्तव्या विहिता यतः ।
अन्यथा प्रत्यवायः स्यात् कर्मण्येवाधिकारिणाम् ॥ १३ ॥
कर्ममात्रैकशरणाः श्रेयः प्राप्स्यन्त्यनुत्तमम् ।
न देवता चतुर्थ्यन्तविनियोगादृते परा ॥ १४ ॥
वेदबाह्यान्निराकृत्य भट्टाचार्यैर्गते पथि ।
चक्रे प्रभाकरः शास्त्रं गुरुः कर्माधिकारिणाम् ॥ १५ ॥

इति सर्वसिद्धान्तसंग्रहे प्रभाकरपक्षो नाम सप्तमं प्रकरणम् ।

---

अथ भट्टाचार्यपक्षः ।

बौद्धादिनास्तिकध्वस्तवेदमार्गं पुरा किल ।
भट्टाचार्यः कुमारांशः स्थापयामास भूतले ॥ १ ॥
त्यक्त्वा काम्यनिषिद्धे द्वे विहिताचरणान्नरः ।
शुद्धान्तःकरणो ज्ञानी परं निर्वाणमृच्छति ॥ २ ॥
काम्यकर्माणि कुर्वाणैः काम्यकर्मानुरूपतः ।
जनित्वैवोपभोक्तव्यं भूयः काम्यफलं नरैः ॥ ३ ॥
कृमिकीटादिरूपेण जनित्वा तु निषिद्धकृत् ।
निषिद्धफलभोगी स्यादधोऽधोनरकं व्रजेत् ॥ ४ ॥
अतो विचार्य विज्ञेयौ धर्माधर्मौ विपश्चिता ।
चोदनैकप्रमाणौ तौ न प्रत्यक्षादिगोचरौ ॥ ५ ॥
विध्यर्थवादैर्मन्त्रैश्च नामधेयैश्चतुर्विधः ।
वेदो विधिप्रधानोऽयं धर्माधर्मावबोधकः ॥ ६ ॥
निवर्तकं निषिद्धाद्यत् पुंसां धर्मप्रवर्तकम् ।
वाक्यं तच्चोदना वेदे लिङ्लोट्तव्यादिलाञ्छितम् ॥७॥
निषिद्धनिन्दकं यत्तु विहितार्थप्रशंसकम् ।
वाक्यमत्रार्थवादः स्याद्विध्यंशत्वात्प्रमाणकम् ॥ ८ ॥
कर्माङ्गभूता मन्त्राः स्युरनुष्ठेयप्रकाशकाः ।
यागादेर्नामभूतानि नामधेयानि हि श्रुतौ ॥ ९ ॥
आत्मा ज्ञातव्य इत्येवं विधयस्त्वारुणेषु ये ।
बोधं विदधते ब्रह्मण्यात्मनां परमात्मनि ॥ १० ॥

दूषयन्त्यनुमानाभ्यां बौद्धा वेदमपि स्फुटम् ।
तन्मूललब्धधर्मादेरपलापस्तु नेष्यते ॥११॥
वेदोऽप्रमाणं वाक्यत्वाद्रथ्यापुरुषवाक्यवत् ।
अथानाप्तप्रणीतत्वादुन्मत्तानां यथा वचः ॥ १२ ॥
तदयुक्तमिमौ हेतू भवेतामप्रयोजकौ ।
वाक्यत्वमात्राद्वेदस्य न भवत्यप्रमाणता ॥ १३ ॥
अनाप्तपुरुषोक्तत्वं हेतुस्ते न प्रयोजकः ।
स्यादनाप्तोक्ततामात्रादप्रामाण्यं न च श्रुतेः ॥ १४ ॥
नित्यवेदस्य चानाप्तप्रणीतत्वं न दुष्यति ।
विप्रलम्भादयो दोषा विद्यन्ते पुंगिरां सदा ॥ १५ ॥
वेदस्यापौरुषेयत्वाद् दोषाशङ्कैव नास्ति नः ।
वेदस्यापौरुषेयत्वं केचिन्नैयायिकादयः ॥ १६ ॥
दूषयन्तीश्वरोक्तत्वान्मन्यमानाः प्रमाणताम् ।
पौरुषेयो भवेद्वेदो वाक्यत्वाद्भारतादिवत् ॥ १७ ॥
सर्वेश्वरप्रणीतत्वे प्रामाण्यमपि सुस्थितम् ।
प्रामाण्यं विद्यते नेति पौरुषेयेषु युज्यते ॥ १८ ॥
वेदे वक्तुरभावाच्च तद्वार्तापि सदुर्लभा ।
वेदस्य नित्यता प्रोक्ता प्रामाण्येनोपयुज्यते ॥ १९ ॥
सर्वेश्वरप्रणीतत्वं प्रामाण्यस्यैव कारणम् ।
तदयुक्तं प्रमाणेन केनात्रेश्वरकल्पना ॥ २० ॥
स यद्यागमकल्प्यः स्यान्नित्योऽनित्यः किमागमः ।
नित्यश्चेत्तं प्रतीशस्य केयं कर्तृत्वकल्पना ॥ २१ ॥

अनित्यागमपक्षे स्यादन्योन्याश्रयदूषणम् ।
आगमस्य प्रमाणत्वमीश्वरोक्त्येश्वरस्ततः ॥ २२ ॥
आगमात्सिद्ध्यतीत्येवमन्योन्याश्रयदूषणम् ।
स्वत एव प्रमाणत्वमतो वेदस्य सुस्थितम् ॥ २३ ॥
धर्माधर्मौ च वेदैकगोचरावित्यपि स्थितम् ।
ननु वेदं विना साक्षात्करामलकवत्स्फुटम् ॥ २४ ॥
पश्यन्ति योगिनो धर्मं कथं वेदैकमानता ।
तदयुक्तं न योगी स्यादस्मदादिविलक्षणः ॥ २५ ॥
सोऽपि पञ्चेन्द्रियैः पश्यन् विषयं नातिरिच्यते ।
प्रत्यक्षमनुमानाख्यमुपमानमनन्तरम् ॥ २६ ॥
अर्थापत्तिरभावश्च न धर्मं बोधयन्ति वै ।
तत्तदिन्द्रिययोगेन वर्तमानार्थबोधकम् ॥ २७ ॥
प्रत्यक्षं नहि गृह्णाति सोऽप्यतीतमनागतम् ।
धर्मेण नित्यसम्बन्धिरूपस्याभावतः क्वचित् ॥ २८ ॥
नानुमानमपि व्यक्तं धर्माधर्मावबोधकम् ।
धर्मादिसदृशाभावादुपमानमपि क्वचित् ॥ २९ ॥
सादृश्यग्राहकं नैव धर्माधर्मावबोधकम् ।
सुखस्य कारणं धर्मो दुःखस्याधर्म इत्यपि ॥ ३० ॥
अर्थापत्त्यात्र सामान्यमात्रे ज्ञाते न दुष्यति ।
सामान्यमननुष्ठेयं किं चातीतं तदा भवेत् ॥ ३१ ॥
यागादयो ह्यनुष्ठेया विशेषा विधिचोदिताः ।
अभावाख्यं प्रमाणं न पुण्यापुण्यप्रकाशकम् ॥ ३२ ।

प्रमाणपञ्चकाभावे तत्सदा वर्तते यतः ।
वेदैकगोचरौ तस्माद्धर्माधर्माविति स्थितम् ॥ ३३ ॥
वेदैकविहितं कर्म मोक्षदं नापरं ततः ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ ३४ ॥
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ।
आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादिते ॥ ३५ ॥
जीवात्मनां प्रबोधस्तु जायते परमात्मनि ।
प्रत्याहारादिकं योगमभ्यस्यन् विहितक्रियः ॥ ३६ ॥
मनः करणकेनात्मा प्रत्यक्षेणावसीयते ।
भिन्नाभिन्नात्मकस्त्वात्मा गोवत्सदसदात्मतः ॥ ३७ ॥
जीवरूपेण भिन्नोऽपि त्वभिन्नः पररूपतः ।
असत्स्याज्जीवरूपेण सद्रूपः पररूपतः ॥ ३८ ॥
शाबलेयादिगोष्वेव यथा गोत्वं प्रतीयते ।
परमात्मा त्वनुस्यूतवृत्तिर्जीवेऽपि बुध्यताम् ॥ ३९ ॥
त्रैयम्बकादिभिर्मन्त्रैः पूज्यो ध्येयो मुमुक्षुभिः ।
ध्यात्वैवारोपिताकारं कैवल्यं सोऽधिगच्छति ॥ ४० ॥
परानन्दानुभूतिः स्यान्मोक्षे तु विषयादृते ।
विषयेषु विरक्ताः स्युर्नित्यानन्दानुभूतितः ॥ ४१ ॥
गच्छन्त्यपुनरावृत्तिं मोक्षमेवं मुमुक्षवः ॥ ४१½ ॥

इति सर्वसिद्धान्तसंग्रहे भट्टाचार्यपक्षो नाम अष्टमं प्रकरणम् ।

---

## अथ सांख्यपक्षः ।

सांख्यदर्शनसिद्धान्तः संक्षेपादथ कथ्यते ।
सांख्यशास्त्रं द्विधा भूतं सेश्वरं च निरीश्वरम् ॥ १ ॥
चक्रे निरिश्वरं सांख्यं कपिलोऽन्यत्पतञ्जलिः ।
कपिलो वासुदेवस्स्यादनन्तस्तु पतञ्जलिः ॥ २ ॥
ज्ञानेन मुक्तिं कपिलो योगेनाह पतञ्जलिः ।
योगी कपिलपक्षोक्तं तत्त्वज्ञानमपेक्षते ॥ ३ ॥
श्रुतिस्मृतीतिहासेषु पुराणे भारतादिके ।
सांख्योक्तं दृश्यते स्पष्टं तथा शैवागमादिषु ॥ ४ ॥
व्यक्ताव्यक्तविवेकेन पुरुषस्यैव वेदनात् ।
दुःखत्रयनिवृत्तिः स्यादेकान्तात्यन्ततो नृणाम् ॥ ५ ॥
दुःखमाध्यात्मिकं चाधिभौतिकं चाधिदैविकम् ।
आध्यात्मिकं मनोदुःखं व्याधायः पिटकादयः ॥ ६ ॥
आधिभौतिकदुःखं स्यात्कीटादिप्राणिसम्भवम् ।
वर्षातपादिसंभूतं दुःखं स्यादादिधिभौतिकम् ॥ ७ ॥
एकान्तात्यन्ततो दुःखं निवर्तेतात्मवेदनात् ।
उपायान्तरतो मोक्षः क्षयातिशयसंयुतः ॥ ८ ॥
न चौषधैर्न यागाद्यैः स्वर्गादिफलहेतुभिः ।
त्रैगुण्यविषयैर्मोक्षस्तत्त्वज्ञानादृते परैः ॥ ९ ॥
पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तादिकानि यः ।
वेत्ति तस्यैव विस्पष्टमात्मज्ञानं भविष्यति ॥ १० ॥

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ ११ ॥
पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान् ।
अहंकारश्च शब्दश्च स्पर्शरूपरसास्तथा ॥ १२ ॥
गन्धः श्रोत्रं त्वक् च चक्षुर्जिह्वा घ्राणं च वागपि ।
पाणिः पादस्तथा पायुरुपस्थश्च मनस्तथा ॥ १३ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमित्यपि ।
सृष्टिप्रकारं वक्ष्यामि तत्त्वात्मकमिदं जगत् ॥ १४ ॥
सर्वं हि प्रकृतेः कार्यं नित्यैका प्रकृतिर्जडा ।
प्रकृतेस्त्रिगुणावेशादुदासीनोऽपि कर्तृवत् १५
स चेतनावत्तद्योगात्सर्गः पङ्ग्वन्धयोगवत् ।
प्रकृतिर्गुणसाम्यं स्याद्गुणाः सत्त्वं रजस्तमः ॥ १६ ॥
सत्त्वोदये सुखं प्रीतिः शान्तिर्लज्जाङ्गलाघवम् ।
क्षमा धृतिरकार्पण्यं दमो ज्ञानप्रकाशनम् ॥ १७ ॥
रजोगुणोदये लोभः संतापः कोपविग्रहौ ।
अभिमानो मृषावादः प्रवृत्तिर्दम्भ इत्यपि ॥ १८ ॥
तमोगुणोदये तन्द्री मोहो निद्राङ्गगौरवम् ।
आलस्यमप्रबोधश्च प्रमादश्चैवमादयः ॥ १९ ॥
व्यासाभिप्रेतसिद्धान्ते वक्ष्येऽहं भारते स्फुटम् ।
त्रैगुण्यविततिं सम्यग्विस्तरेण यथायथम् ॥ २० ॥
प्रकृतेः स्यान्महांस्तस्मादहङ्कारस्ततोऽप्यभूत् ।
तन्मात्राख्यानि पञ्च स्युः सूक्ष्मभूतानि तानि हि ॥ २१ ॥

वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ।
शब्दः स्पर्शस्तथा रूपं रसो गन्ध इतीरिताः ॥ २२ ॥
खवाय्वग्न्यम्बुपृथ्व्यः स्युः सूक्ष्मा एव न चापरे ।
पटः स्याच्छुक्लतन्तुभ्यः शुक्ल एव यथा तथा ॥ २३ ॥
त्रिगुणानुगुणं तस्मात्तत्त्वसृष्टिरपि त्रिधा ।
सत्त्वात्मकानि सृष्टानि तेभ्यो ज्ञानेन्द्रियाण्यथ ॥ २४ ॥
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमित्यत्र पञ्चकम् ।
तैः शब्दस्पर्शरूपाणि रसगन्धौ प्रवेत्त्यसौ ॥ २५ ॥
रजोगुणोद्भवानि स्युस्तेभ्यः कर्मेन्द्रियाण्यथ ।
वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ॥ २६ ॥
वचनादानगमनविसर्गानन्दकर्म च ।
मनोऽन्तःकरणाख्यं स्याज्ज्ञेयमेकादशेन्द्रियम् ॥ २७ ॥
तमोगुणोद्भवान्येभ्यो महाभूतानि जज्ञिरे ।
पृथिव्यापस्तथा तेजो वायुराकाश इत्यपि ॥ २८ ॥
पञ्चविंशतितत्त्वानि प्रोक्तान्येतानि वै मया ।
एतान्येव विशेषेण ज्ञातव्यानि गुरोर्मुखात् ॥ २९ ॥
आत्मानः प्रलये लीनाः प्रकृतौ सूक्ष्मदेहिनः ।
गुणकर्मवशाद्ब्रह्मस्थावरान्तस्वरूपिणः ॥ ३० ॥
प्रकृतौ सूक्ष्मरूपेण स्थितमेवाखिलं जगत् ।
अभिव्यक्तं भवत्येव नासदुत्पत्तिरिष्यते ॥ ३१ ॥
असदुत्पत्तिपक्षे च शशशृङ्गादि सम्भवेत् ।
असत्तैलं तिलादौ चेत्सिकताभ्योऽपि तद्भवेत् ॥ ३२ ॥

जनितं जनयेच्चेति यस्तु दोषस्त्वयेरितः ।
अभिव्यक्तिमते न स्यादभिव्यञ्जककारणैः ॥ ३३ ॥
आत्मानो बहवः साध्या देहे देहे व्यवस्थिताः ।
एकश्चेद्युगपत् सर्वे म्रियेरन् सम्भवन्तु वा ॥ ३४ ॥
पश्येयुर्युगत्पसर्वे पुंस्येकस्मिन्प्रपश्यति ।
अतः स्यादात्मनानात्वमद्वैतं नोपपद्यते ॥ ३५ ॥
आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादितः ।
निवृत्तिरूपधर्मः स्यान्मोक्षदोऽन्यः प्रवर्तकः ॥ ३६ ॥
अग्निष्टोमादयो यज्ञाः काम्याः स्युर्विहिता अपि ।
प्रवृत्तिधर्मास्ते ज्ञेया यतः पुंसां प्रवर्तकाः ॥ ३७ ॥
धर्मेणोर्ध्वगतिः पुंसामधर्मात्स्यादधोगतिः ।
ज्ञानेनैवापवर्गः स्यादज्ञानाद्बध्यते नरः ॥ ३८ ॥
ब्रह्मार्पणतया यज्ञाः कृतास्ते मोक्षदा यदि ।
अयज्ञत्वप्रसङ्गः स्यान्मन्त्रार्थस्यान्यथाकृतेः ॥ ३९ ॥
तस्माद्यागादयो धर्माः संसारेषु प्रवर्तकाः ।
निषिद्धेभ्योऽपि कर्तव्याः पुसां संपत्तिहेतवः ॥ ४० ॥

इति सर्वसिद्धान्तसंग्रहे कपिलवासुदेवसांख्यपक्षो नाम नवमं प्रकरणम् ।

---

अथ पतञ्जलिपक्षः ।

अथ सेश्वरसांख्यस्य वक्ष्ये पक्षं पतञ्जलेः ।
पतञ्जलिरनन्तः स्याद्योगशास्त्रप्रवर्तकः ॥ १ ॥

पञ्चविंशतितत्त्वानि पुरुषं प्रकृतेः परम् ।
ज्ञानतो योगसिद्धिः स्याद्योगाद्दोषक्षयो भवेत् ॥ २ ॥
पञ्चविंशतितत्त्वानि पुरुषः प्रकृतेर्महान् ।
अहङ्कारश्च तन्मात्रा विकाराश्चापि षोडश ॥ ३ ॥
महाभूतानि चेत्येतद्दर्षिणैव सुविस्तृतम् ।
ज्ञानमात्रेण मुक्तिः स्यादित्यालस्यस्य लक्षणम् ॥ ४ ॥
ज्ञानिनोऽपि भवत्येव दोषैर्बुद्धिभ्रमः क्वचित् ।
गुरूपदिष्टविद्यातो नष्टाविद्योऽपि पूरुषः ॥ ५ ॥
देहदर्पणदोषांस्तु योगेनैव विनाशयेत् ।
सम्यग्ज्ञातो रसो यद्वद्गुडादेर्नानुभूयते ॥ ६ ॥
पित्तज्वरयुतैस्तस्माद्दोषानेव विनाशयेत् ।
गुरूपदिष्टविद्यस्य विरक्तस्य नरस्य तु ॥ ७ ॥
दोषक्षयकरस्तस्माद्योगादन्यो न विद्यते ।
अविद्योपात्तकर्तृत्वात्कामात्कर्माणि कुर्वते ॥ ८ ॥
ततः कर्मविपाकेन जात्यायुर्भोगसम्भवः ।
पञ्चक्लेशास्त्वविद्या च रागद्वेषौ तदुद्भवौ ॥ ९ ॥
अस्मिताभिनिवेशौ च तत्राविद्यैव कारणम् ।
आत्मबुद्धिरविद्या स्यादनात्मनि कलेवरे ॥ १० ॥
पञ्चभूतात्मको देहो देही त्वात्मा ततोऽपरः ।
तज्जन्यपुत्रपौत्रादिसन्तानेऽपि ममत्वधीः ॥ ११ ॥
अविद्या देहभोग्ये वा गृहक्षेत्रादिके तथा ।
नष्टाविद्योऽथ तन्मूलरागद्वेषादिवर्जितः ॥ १२ ॥

मुक्तये योगमभ्यस्येदिहामुत्रफलास्पृहः ।
चित्तवृत्तिनिरोधः स्याद्योगः स्वस्मिन्व्यवस्थितः ॥ १३ ॥
वृत्तयो नात्र वर्ण्यन्ते क्लिष्टाक्लिष्टविभेदिताः ।
क्रियायोगं प्रकुर्वीत साक्षाद्योगप्रवर्तकम् ॥ १४ ॥
क्रियायोगस्तपो मन्त्रजपो भक्तिर्दृढेश्वरे ।
क्लेशकर्मविपाकादिशून्यः सर्वज्ञ ईश्वरः ॥ १५ ॥
स कालेनानवच्छेदाद् ब्रह्मादीनां गुरुर्मतः ।
तद्वाचकः स्यात्प्रणवस्तज्जपो वाच्यभावनम् ॥ १६ ॥
योगान्तरायनाशः स्यात्तेन प्रत्यङ्मनो भवेत् ।
आलस्यं व्याधयस्तीव्राः प्रमादस्त्यानसंशयाः ॥१७॥
अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् ।
दुःखानि दौर्मनस्यं च विषयेषु च लोलता ॥१८॥
श्वासप्रश्वासदोषौ च देहकम्पो निरङ्कुशः ।
इत्येवमादयो दोषा योगविघ्नाः स्वभावतः ॥१९॥
ईश्वरप्रणिधानेन तस्माद्विघ्नान्विनाशयेत् ।
मैत्र्यादिभिर्मनः शुद्धिं कुर्याद्योगस्य साधनम् ॥२०॥
मैत्रीं कुर्यात्सुधीर्लोके करुणां दुःखिते जने ।
धर्मेऽनुमोदनं कुर्यादुपेक्षामेव पापिनाम् ॥२१॥
भगवत्क्षेत्रसेवा च सज्जनस्य च संगतिः ।
भगवच्चरिताभ्यासो भावना प्रत्यगात्मनः ॥२२॥
इत्येवमादिभिर्यत्नैः संशुद्धं योगिनो मनः ।
शक्तं स्यादतिसूक्ष्माणां महतामपि भावने ॥२३॥

योगाङ्करणाद्दोषे नष्टे ज्ञानप्रकाशनम् ।
अष्टावङ्गानि योगस्य यमोऽथ नियमस्तथा ॥२४॥
आसनं पवनायामः प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरित्येवं तानि विस्तरतो यथा ॥२५॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः पञ्च भवन्त्येते जात्याद्यनुगुणा मताः ॥२६॥
नियमाः शौचसन्तोषतपोमन्त्रेशसेवनाः ।
यमस्य नियमस्यापि सिद्धौ वक्ष्ये फलानि च ॥२७॥
अहिंसायाः फलं तस्य सन्निधौ वैरवर्जनम् ।
सत्यादमोघवाक्त्वं स्यादस्तेयाद्रत्नसंगतिः ॥२८॥
ब्रह्मचर्याद्वीर्यलाभो जन्मधीरपरिग्रहात् ।
शौचात्स्वाङ्गे जुगुप्सा स्याद्दुर्जनस्पर्शवर्जनम् ॥२९॥
सत्त्वशुद्धिः सौमनस्यमैकात्म्येन्द्रियवश्यते ।
आत्मदर्शनयोग्यत्वं मनः शौचफलं भवेत् ॥३०॥
अनुत्तमसुखावाप्तिः सन्तोषाद्योगिनो भवेत् ।
इन्द्रियाणां च कायस्य सिद्धिः स्यात्तपसः फलम् ॥३१॥
इन्द्रियस्य तु सिद्ध्या स्याद् दूरालोकादिसंभवः ।
कायसिद्ध्याणिमादिः स्यात्तस्य दिव्यशरीरिणः ॥३२॥
जपेन देवताकर्षः समाधिस्त्वीशसेवया ।
आसनं स्यात् स्थिरसुखं द्वन्द्वनाशस्ततो भवेत् ॥३३॥
पद्मभद्रमयूराख्यैर्वीरस्वस्तिककुक्कुटैः ।
आसनैर्योगशास्त्रोक्तैरासितव्यं च योगिभिः ॥३४॥

प्राणापाननिरोधः स्यात् प्राणायामस्त्रिधा हि सः ।
कर्तव्यो योगिना तेन रेचपूरककुम्भकैः ॥३५॥
रेचनाद्रेचको वायोः पूरणात्पूरको भवेत् ।
संपूर्णकुम्भवत्स्थानादचलः स तु कुम्भकः ॥३६॥
प्राणायामश्चतुर्थः स्याद्रेचपूरककुम्भकान् ।
हित्वा निजस्थितिर्वायोरविद्या पापनाशिनी ॥३७॥
इन्द्रियाणां च चरतां विषयेभ्यो निवर्तनम् ।
प्रत्याहारो भवेत्तस्य फलमिन्द्रियवश्यता ॥३८॥
चित्तस्य देशबन्धः स्याद्धारणा द्विविधा हि सा ।
देशबाह्यान्तरत्वेन बाह्यः स्यात्प्रतिमादिकः ॥३९॥
चित्तस्य बन्धनं तत्र वृत्तिरेव नचापरम् ॥४०॥
नाभिचक्रादिदेशेषु प्रत्ययस्यैकतानता ।
ध्यानं समाधिस्तत्रैव स्वात्मनः शून्यवत्स्थितिः ॥४१॥
धारणादित्रये त्वेकविषये पारिभाषिकी ।
संज्ञासंयम इत्येषा त्रयोच्चारणलाघवात् ॥४२॥
योगिनः संयमजयात् प्रज्ञालोकः प्रवर्तते ।
संयमस्य तु कर्तव्यो विनियोगोऽत्र भूमिषु ॥४३॥
पञ्चभ्योऽपि यमादिभ्यो धारणादित्रयं भवेत् ।
अन्तरङ्गं हि निर्बीजसमाधिः स्यात्ततः परम् ॥४४॥
अजित्वा त्वपरां भूमिं नारोहेद्भूमिमुत्तराम् ।
अजित्वारोहणे भूमेर्योगिनः स्युरुपद्रवाः ॥४५॥
हिक्काश्वासप्रतिश्यायकर्णदन्ताक्षिवेदनाः ।
मूकताजडताकासशिरोरोगज्वरास्त्विति ॥४६॥

यस्येश्वरप्रसादेन योगो भवति तस्य तु ।
न रोगाः सम्भवन्त्येते येऽवरोत्तरभूमिजाः ॥४७॥
एक एवाखिलो धर्मो बाल्यकौमारयौवनैः ।
वार्धकेन तु कालेन परिणामाद्विनश्यति ॥४८॥
पराग्भूतस्य नाडीडापिङ्गलाभ्यामहर्निशम् ।
कालस्तं शमयेत् प्रत्यगभियातः सुषुम्नया ॥४९॥
मुक्तिमार्गः सुषुम्ना स्यात् कालस्तत्र हि वञ्चितः ।
चन्द्रादित्यात्मकः कालस्तयोर्मार्गद्वयं स्फुटम् ॥ ५० ॥
क्षीरात्समुद्धृतं त्वाज्यं न पुनः क्षीरतां व्रजेत् ।
पृथक्कृतो गुणेभ्यस्तु भूयोनात्मा गुणी भवेत् ॥ ५१ ॥
यथानीता रसेन्द्रेण धातवः शातकुम्भताम् ।
पुनरावृत्तये न स्युस्तद्वदात्मापि योगिनाम् ॥ ५२ ॥
नाडीचक्रगतिर्ज्ञेया योगमभ्यस्यतां सदा ।
सुषुम्ना मध्यवंशास्थिद्वारेण तु शिरोगता ॥ ५३ ॥
इडा च पिङ्गला घ्राणप्रदेशे सव्यदक्षिणे ।
इडा चन्द्रस्य मार्गः स्यात्पिङ्गला तु रवेस्तथा ॥ ५४ ॥
कुहूरधोगता लिङ्गं वृषणं पायुमप्यसौ ।
विश्वोदरा धारणा च सव्येतरकरौ क्रमात् ॥ ५५ ॥
सव्येतराङ्घ्री विज्ञेयौ हस्तिजिह्वा यशस्विनी ।
सरस्वती तु जिह्वा स्यात् सुषुम्ना पृष्ठनिर्गता ॥ ५६ ॥
तत्पार्श्वयोः स्थितौ कर्णौ शङ्खिनी च पयस्विनी ।
गान्धारी सव्यनेत्रं स्यान्नेत्रं पूषा तु दक्षिणम् ॥ ५७ ॥

ज्ञानकर्मेन्द्रियाणि स्युर्नाड्यः कण्ठादिभिः सृता ।
नाड्यो हि योगिनां ज्ञेया सिरा एव नचापराः ॥ ५८ ॥
प्राणादिवायुसंचारो नाडीष्वेव यथा तथा ।
ज्ञातव्यो योगशास्त्रेषु तद्व्यापारश्च दृश्यताम् ॥ ५९ ॥
योगी तु संयमस्थाने संयमात्सर्वविद्भवेत् ।
पूर्वजातिपरिज्ञानं संस्कारे संयमाद्भवेत् ॥ ६० ॥
हस्त्यादीनां बलानि स्युर्हस्त्यादिस्थानसंयमात् ।
मैत्र्यादि लभते योगी मैत्र्यादिस्थानसंयमात् ॥ ६१ ॥
चन्द्रे स्यात्संयमात्तस्य तारकाव्यूहवेदनम् ।
ध्रुवेऽनागतविज्ञानं सूर्ये स्याद्भुवनेषु धीः ॥ ६२ ॥
कायव्यूहपरिज्ञानं नाभिचक्रे तु संयमात् ।
क्षुत्पिपासानिवृत्तिः स्यात्कर्णकूपे तु संयमात् ॥ ६३ ॥
कर्णनाड्यां भवेत्स्थैर्यमथ ज्योतिषि सिद्धधीः ।
जिह्वाग्रे रससंवित्स्यान्नासाग्रे गन्धवेदनम् ॥ ६४ ॥
अभ्यासादनिशं तस्माद्देहकान्तिः शुभाकृतिः ।
क्षुदादिविनिवृत्तिश्च जायते वत्सराद्यतः ॥ ६५ ॥
संवत्सरेण विविधा जायन्ते योगसिद्धयः ।
यथेष्टचरितं ज्ञानमतीताद्यर्थगोचरम् ॥ ६६ ॥
स्वदेहेन्द्रियसंशुद्धिर्जरामरणसंक्षयः ।
वैराग्येण निवृत्तिः स्यात संसारे योगिनोऽचिरात् ॥ ६७ ॥
अणिमाद्यष्टकं तस्य योगसिद्धस्य जायते ।
तेन मुक्तिविरोधो न शिवस्येव यथा तथा ॥ ६८ ॥

अणिमा लघिमा चैव महिमा प्राप्तिरीशिता ।
प्राकाम्यं च तथेशित्वं वशित्वं यत्र कामदम् ॥ ६९ ॥

इति सर्वसिद्धान्तसंग्रहे पतञ्जलिसेश्वरसांख्यपक्षो नाम दशमं प्रकरणम् ।

## अथ भारतपक्षः

सर्वशास्त्राविरोधेन व्यासोक्तो भारते द्विजैः ।
गृह्यते सांख्यपक्षाद्धि वेदसारोऽथ वैदिकैः ॥ १ ॥
पुरुषः प्रकृतिश्चेति द्वयात्मकमिदं जगत् ।
परः शयानस्तन्मात्रपुरे तु पुरुषः स्मृतः ॥ २ ॥
तन्मात्राः सूक्ष्मभूतानि प्रायस्ते त्रिगुणाः स्मृताः ।
प्रकृतिर्गुणसाम्यं स्याद्गुणाः सत्त्वं रजस्तमः ॥ ३ ॥
बन्धः पुंसो गुणावेशो मुक्तिर्गुणविवेकधीः ।
गुणस्वभावैरात्मा स्यादुत्तमो मध्यमोऽधमः ॥ ४ ॥
उत्तमः सात्त्विकः श्लेष्मप्रकृतिः सजलात्मकः ।
राजसो मध्यमो ह्यात्मा स पित्तप्रकृतिर्मतः ॥ ५ ॥
अधमस्तामसो वातप्रकृतिर्यत्तमो मरुत् ।
सत्त्वं शुक्लं रजो रक्तं धूम्रं कृष्णं तमो मतम् ॥ ६ ॥
जलाग्निपवनात्मानः शुक्लरक्तासितास्ततः ।
तत्तदाकारचेष्टाद्यैर्लक्ष्यन्ते सात्त्विकादयः ॥ ७ ॥
प्रियङ्गुदूर्वाशरकाब्जहेमवर्णः कफात्मकः ।
गूढास्थिबन्धः सुस्निग्धपृथुवक्षा बृहत्तनुः ॥ ८ ॥

गम्भीरो मांसलः सौम्यो गजगामी महामनाः ।
मृदङ्गनादो मेधावी दयालुः सत्यवागृजुः ॥ ९ ॥
क्षुद्रदुःखपरिक्लेशैरतप्तो घर्मतस्तथा ।
अनेकपुत्रभृत्याढयो भूरिशुक्लो रतिक्षमः ॥ १० ॥
धर्मात्मा मितभाषी च निष्ठुरं वक्ति न क्वचित् ।
बाल्येऽप्यरोदनोऽलोलो न बुभुक्षार्दितो भृशम् ॥ ११ ॥
भुङ्क्तेऽल्पं मधुरं कोष्णं तथापि बलवानसौ ।
अप्रतीकारतो वैरं चिरं गूढं वहत्यसौ ॥ १२ ॥
धृतिर्बुद्धिः स्मृतिः प्रीतिः सुखं लज्जाङ्गलाघवम् ।
आनृण्यं समतारोग्यमकार्पण्यमचापलम् ॥ १३ ॥
इष्टापूर्तविशेषाणां क्रतूनामविकत्थनम् ।
दानेनार्चानुग्रहणमस्पृहा च परार्थतः ॥ १४ ॥
सर्वभूतदया चेति गुणैर्ज्ञेयोऽत्र सात्त्विकः ।
रजोगुणपरिच्छेद्यो राजसोऽत्र यथा जनः ॥ १५ ॥
रजः पित्तं तदेवाग्निरग्निस्तत्पित्तजस्तु वा ।
तीव्रतृष्णो बुभुक्षार्तिः पैत्तिकोऽमितभोजनः ॥ १६ ॥
पिङ्गकेशोऽल्परोमा च ताम्रवक्त्राङ्घ्रिहस्तकः ।
घर्मासहिष्णुरुष्णाङ्गः स्वेदनः पूतिगन्धयुक् ॥ १७ ॥
स्वस्थो विरेचनादेवं मृदुकोष्ठोऽतिकोपनः ।
शूरः सुचरितो मानी क्लेशभीरुश्च पण्डितः ॥ १८ ॥
माल्यानुलेपनादीच्छुरतिस्वस्थोज्ज्वलाकृतिः ।
अल्पशुक्रोऽल्पकामश्च कामिनीनामनीप्सितः ॥ १९ ॥

बाल्येऽपि पलितं धत्ते रक्तरोमाथ नीलिकाम् ।
बली साहसिको भोगी संप्राप्तविभवस्तथा ॥ २० ॥
भुङ्क्तेऽतिमधुरं चार्द्रं भक्ष्यं कट्वम्लनिस्पृहः ।
नात्युष्णभोजी पानीयमन्तरा प्रचुरं पिबन् ॥ २१ ॥
नेत्रं चात्यल्पपक्ष्मास्यं भवेच्छीतजलप्रियः ।
कोपेनार्काभितापेन रागमाशु प्रयाति च ॥ २२ ॥
अत्यागित्वभकाहण्यं सुखदुःखोपसेवनम् ।
अहंकारादसत्कारश्चिन्तावैरोपसेवनम् ॥ २३ ॥
परभार्यापहरणं ह्रीनाशोऽनार्जवं त्विति ।
राजसस्य गुणाः प्रोक्तास्तामसस्य गुणा यथा ॥ २४ ॥
अधर्मस्तामसो ज्ञेयस्तामसो वातिको जनः ।
अधन्यो मत्सरी चोरः प्राकृतो नास्तिको भृशम् ॥ २५ ॥
दीर्घस्फुटितकेशान्तः कृशः कृष्णोऽतिलोमशः ।
अस्निग्धविरलस्थूलदन्तो धूसरविग्रहः ॥ २६ ॥
चञ्चलास्य धृतिर्बुद्धिश्चेष्टा दृष्टिर्गतिः स्मृतिः ।
सौहार्दमस्थिरं तस्य प्रलापोऽसंगतस्सदा ॥ २७ ॥
बह्वाशी मृगयाशीलो मलिष्ठः कलहप्रियः ।
शीतासहिष्णुश्चपलो दोषधीर्जर्जरस्वरः ॥ २८ ॥
नग्नसक्तचलालापो गीतवाद्यरतः सदा ।
मधुराद्युपभोगा च भक्ष्यपकाम्लसस्पृहः ॥ २९ ॥
अल्पपित्तकफः प्रेक्ष्योऽस्वल्पनिद्रोऽल्पजीवनः ।
एवमादिगुणैर्ज्ञेयस्तामसो वातिको जनः ॥ ३० ॥

पञ्चभूतगुणान्वक्ष्ये त्रैगुण्यान्नातिभेदिनः ।
जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः ॥ ३१ ॥
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ।
त्वक् च मांसं तथास्थीनि मज्जा स्नायुश्च पञ्चमः ॥ ३२॥
इत्येतदिह संख्यातं शरीरे पृथिवीमयम् ।
तेजोऽग्नितस्तथा क्रोधश्चक्षुरूष्मा तथैव च ॥ ३३ ॥
अग्निर्जरयते चापि पञ्चाग्नेयाः शरीरिणाम् ।
श्रोत्रं घ्राणमथास्यं च हृदयं कोष्ठमेव च ॥ ३४ ॥
आकाशात्प्राणिनामेते शरीरे पञ्च धातवः ।
श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च ॥ ३५ ॥
इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा ।
प्राणात्प्राणयते देही व्यानाद्व्यायच्छते सदा ॥ ३६ ॥
गच्छत्यपानोऽवाक् चैव समानो हृद्यवस्थितः ।
उदानादुच्छ्वसिति च वृत्तिभेदांश्च भाषते ॥ ३७ ॥
इत्येते वायवः पञ्च चेष्टयन्तीह देहिनः ।
इष्टानिष्टसगन्धश्च मधुरः कटुरेव च ॥ ३८ ॥
निर्हारी संगतः स्निग्धो रूक्षो विशद एव च ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥ ३९ ॥
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयो मतः ॥ ४० ॥
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽथ वृत्तवान् ।
शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा ॥ ४१ ॥

एवं द्वादशविस्तारो ज्योतिषोऽपि गुणः स्मृतः ।
षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ॥ ४२ ॥
धैवतो निषधश्चेति सप्तैते शब्दजा गुणाः ।
उष्णः शीतं सुखं दुःखं स्निग्धो विशद एव च ॥ ४३ ॥
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणौ ।
एवं द्वादशविस्तारो वायव्यो गुण उच्यते ॥ ४४ ॥
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ।
अव्याहतैश्चेतयते न वेत्ति विषमागतैः ॥ ४५ ॥
अथाप्यायतते नित्यं धातुभिस्तैस्तु पञ्चभिः ।
आपोऽग्निर्मरुतश्चैव नित्यं जाग्रति देहिषु ॥ ४६ ॥
चतुर्व्यूहात्मको विष्णुश्चतुर्धैवाकरोज्जगत् ।
ब्रह्मक्षत्रियविट्शूद्रांश्चतुर्वर्णान् गुणात्मकान् ॥ ४७ ॥
विप्रः शुक्लो नृपो रक्तः पीतो वैश्योऽन्त्यजोऽसितः ।
विस्तृत्य धर्मशास्त्रे हि तेषां कर्म समीरितम् ॥ ४८ ॥
एकस्मिन्नेव वर्णे तु चातुर्वर्ण्यं गुणात्मकम् ।
मोक्षधर्मेऽधिकारित्वसिद्धये मुनिरभ्यधात् ॥ ४९ ॥
स कर्मदेवतायोगज्ञानकाण्डेष्वनुक्रमात् ।
प्रवर्तयति तत्कर्म परिपाकक्रमं विदन् ॥ ५० ॥
ऋजवः शुद्धवर्णाभाः क्षमावन्तो दयालवः ।
स्वधर्मनिरता ये स्युस्ते द्विजेषु द्विजातयः ॥ ५१ ॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ ५२ ॥

गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
न स्वकर्म करिष्यन्ति ते द्विजाः वैश्यतां गताः ॥ ५३ ॥
हिंसानृतप्रियाः क्षुद्राः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ ५४ ॥
समयाचारनिःशेषकृत्यभेदैर्विमोहयन् ।
मोक्षदो विष्णुरेव स्याद्देवदैतेयरक्षसाम् ॥ ५५ ॥
चतुर्भिर्जन्मभिर्मुक्तिर्द्वेषेण भजतस्तव ।
भवेदिति वरो दत्तः पुण्डरीकाय विष्णुना ॥ ५६ ॥
रजः सत्त्वतमोमार्गैस्तदात्मानः स्वकर्मभिः ।
प्राप्यते विष्णुरेवैको देवदैत्यनिशाचरैः ॥ ५७ ॥
ब्रह्मविष्णुहराख्याभिः सृष्टिस्थितिलयानपि ।
हरिरेव करोत्येको रजः सत्त्वतमोवशात् ॥ ५८ ॥
सात्त्विकास्त्रिदशाः सर्वे त्वसुरा राजसा मताः ।
तामसा राक्षसाः शीलप्रकृत्याकृतिवर्णतः ॥ ५९ ॥
धर्मः सुराणां पक्षः स्यादधर्मोऽसुररक्षसाम् ।
पिशाचादेरधर्मः स्यादेषां लक्ष्म रजस्तमः ॥ ६० ॥
ईश्वराज्ज्ञानमन्विच्छेच्छ्रियमिच्छेद्धुताशनाम् ।
आरोग्यं भास्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ ६१ ॥
यस्मिन्पक्षे तु यो जातः सुरो वाप्यसुरोऽपि वा ।
स्वधर्म एव तस्य स्यादधर्मोऽप्यत्र धर्मवित् ॥ ६२ ॥
वेदत्रयोक्ता ये धर्मास्तेऽनुष्ठेयास्तु सात्त्विकैः ।
अधर्मोऽथर्ववेदोक्तो राजसैस्तामसैः श्रितः ॥ ६३ ॥

विष्णुक्रमणपर्यन्तो यागोऽस्माकं यथा तथा ।
राजसैस्तामसैर्ब्रह्मरुद्राविज्यौ तु तद्गुणौ ॥ ६४ ॥
निजधर्मपथायातानत्नुगृह्णात्यसौ हरिः ।
मुच्यते निजधर्मेण परधर्मो भयावहः ॥ ६५ ॥
एक एव परो विष्णुः सुरासुरनिशाचरान् ।
त्रिगुणानुगुणं नित्यमनुगृह्णाति लीलया ॥ ६६ ॥

इति सर्वसिद्धान्तसंग्रहे वेदव्यासोक्तो भारतपक्षो नामैकादशं प्रकरणम् ।

अथ वेदान्तपक्षः ।

वेदान्तशास्त्रसिद्धान्तः संक्षेपादथ कथ्यते ।
तदर्थप्रवणाः प्रायः सिद्धान्ताः परवादिनाम् ॥ १ ॥
ब्रह्मार्पणकृतैः पुण्यैर्ब्रह्मज्ञानाधिकारिभिः ।
तत्त्वमस्यादिवाक्यार्थो ब्रह्मजिज्ञास्यते बुधैः ॥ २ ॥
नित्यानित्यविवेकित्वमिहामुत्रफलास्पृहा ।
शमो दमो मुमुक्षुत्वं यस्य तस्याधिकारिता ॥ ३ ॥
तत्त्वमस्येव नान्यत्त्वं तच्छब्दार्थः परेश्वरः ।
त्वंशब्दार्थः पुरोवर्ती तिर्यङ्मर्त्यादिकोऽपरः ॥ ४ ॥
तादात्म्यमसिशब्दार्थो ज्ञेयस्तत्त्वंपदार्थयोः ।
सोऽयं पुरुष इत्यादिवाक्ये तादात्म्यवन्मतः ॥ ५ ॥
स्यान्मतं तत्त्वमस्यादिवाक्यं सिद्धार्थबोधनात् ।
कथं प्रवर्तकं पुंसां विधिरेव प्रवर्तकः ॥ ६ ॥

आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादितः ।
यजमानाः प्रशस्यन्ते तत्त्ववादैरिहारुणैः ॥ ७ ॥
बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः ।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते ॥ ८ ॥
व्यर्थातो ब्रह्मजिज्ञासा वाक्यस्यान्यपरत्वतः ।
अत्र ब्रूमः समाधानं न लिङेव प्रवर्तकः ॥ ९ ॥
इष्टसाधनताज्ञानादपि लोकः प्रवर्तते ।
पुत्रस्ते जात इत्यादौ विधिरूपो न तादृशः ॥१०॥
आत्मा ज्ञातव्य इत्यादिविधयस्त्वारुणे स्थिताः ।
बोधं विदधते ब्रह्मण्यज्ञानाद्भ्रान्तचेतसाम् ॥ ११ ॥
स्यादेतत्काम्यकर्माणि प्रतिषिद्धानि वर्जयन् ।
विहितं कर्म कुर्वाणः शुद्धान्तःकरणः पुमान् ॥१२॥
स्वयमेव भवेज्ज्ञानी गुरुवाक्यानपेक्षया ।
तदयुक्तं न विज्ञानं कर्मभिः केवलैर्भवेत् ॥ १३ ॥
गुरुप्रसादजन्यं हि ज्ञानमित्युक्तमारुणैः ।
प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शक्तितः ॥१४॥
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ।
प्रत्यक्प्रवणबुद्धेस्तु ब्रह्मज्ञानाधिकारिणः ॥ १५ ॥
स्यादेव ब्रह्मजिज्ञासा तत्त्वमस्यादिभिर्गुरोः ।
तत्त्वमस्यादिवाक्यौघो व्याख्यातो हि पुनः पुनः ॥ १६ ॥
गुर्वनुग्रहहीनस्य नात्मा सम्यक् प्रकाशते ।
आत्माविद्यानिमित्तोत्थः प्रपञ्चः पाञ्चभौतिकः ॥ १७ ॥

निवर्तते यथा तुच्छं शरीरभुवनात्मकम् ।
तथा ब्रह्मविवर्तं तु विज्ञेयमखिलं जगत् ॥१८॥
वेदान्तोक्तात्मविज्ञानविपरीतमतिस्तु या ।
आत्मन्यविद्या सानादिः स्थूलसूक्ष्मात्मना स्थिता ॥१९॥
आत्मनः खं ततो वायुरग्निस्ततो जलम् ।
जलात्पृथिव्यभूद्भूमेर्व्रीह्याद्योषधयोऽभवन् ॥२०॥
ओषधिभ्योऽन्नमन्नात्तु पुरुषः पञ्चकोशवान् ।
अपञ्चीकृततन्मात्रः सूक्ष्मभूतात्मको जडः ॥२१॥
स्थूलीभवति तद्भेदस्तिर्यङ्नरसुरात्मकः ।
धर्माधिक्ये तु देवत्वं तिर्यक्त्वं स्याददधर्मतः ॥२२॥
तयोः साम्ये मनुष्यत्वमिति त्रेधा तु कर्मभिः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥२३॥
सप्तान्नपरिणामाः स्युः पुंस्त्रीत्वमपि न स्वतः ।
शुक्राधिक्ये पुमान् गर्भे रक्ताधिक्ये वधूस्तथा ॥२४॥
नपुंसकं तयोः साम्ये मातुः संजायते सदा ।
मज्जास्थिस्नायवः शुक्राद्रक्तात्त्वङ्मांसशोणिताः ॥२५॥
षट्कोशाख्यं भवेदेतत् पितुर्मातुस्त्रयं त्रयम् ।
बुभुक्षा च पिपासा च शोकमोहौ जरामृती ॥२६॥
षडूर्मयः प्राणबुद्धिदेहेषु स्याद् द्वयन्द्वयम् ।
आत्मत्वेन भ्रमन्त्यत्रवादिनः कोशपञ्चके ॥ २७ ॥
अन्नप्राणमनोज्ञानमयाः कोशास्तथात्मनः ।
आनन्दमयकोशश्च पञ्चकोशा इतीरिताः ॥ २८ ॥

मयड्विकारे विहित इत्यानन्दमयोऽभ्यसन् ।
गृह्णात्यन्नमयात्मानं देहं लोकायतः खलु ॥ २९ ॥
देहैः परिमितं प्राणमयमार्हता विदुः ।
विज्ञानमयमात्मानं बौद्धा गृह्णन्ति नापरम् ॥ ३० ॥
आनन्दमयमात्मानं वैदिकाः के चिदूचिरे ।
अहंकारात्मवादी तु प्राह प्रायो मनोमयम् ॥ ३१ ॥
कर्तृत्वाभिरस्पृष्टो ग्राह्य आत्मात्मविन्मते ।
कर्तृत्वं कर्मकाण्डस्थैर्दैवताकाण्डमाश्रितैः ॥३२॥
अवश्याश्रयणीयं हि नान्यथा कर्म सिध्यति ।
वसन्ते ब्राह्मणोऽग्नीनादधीतेति वै विधौ ॥३३॥
देहोवात्मविशिष्टो वा कोधिकारी तु कर्मणि ।
अचेतनत्वाद्देहस्य स्वर्गकामाद्यसंभवात् ॥ ३४ ॥
न जाघटीति कर्तृत्वं नाशित्वात्तत्र कर्मणि ।
आत्मनो ब्राह्मणत्वादि जातिरेव न विद्यते ॥ ३५ ॥
जातिवर्णाश्रमावस्था विकारेभ्योऽपि सोऽपरः ।
विशिष्टो नापरः कश्चिद्विद्यते देहदेहिनोः ॥३६॥
अतः काल्पनिकः कर्ता विज्ञेयस्तत्र कर्मणि ।
नेतिनेत्युच्यमाने तु पञ्चकोशे क्रमेणायः ॥ ३७ ॥
भासते तत्परं ब्रह्म स्यादविद्या ततोऽन्यथा ।
आत्मस्वरूपमाच्छाद्य विक्षेपान् स करोत्यलम् ॥ ३८ ॥
अहंकाराख्यविक्षेपः कामात्कर्मफलस्सदा ।
मूलभूतोऽखिलभ्रान्तेर्बिभ्राणो दुःखसङ्गतिम् ॥ ३९ ॥

व्यवहारान्करोत्युच्चैः सर्वान् लौकिकवैदिकान् ।
मातृमानप्रमेयादिभिन्नान् सर्वस्य सत्यवत् ॥ ४० ॥
निष्क्रियस्य त्वसङ्गस्य चिन्मात्रस्यात्मनः खलु ।
स्वतो न व्यवहारोऽयं संभवत्यनपेक्षिणः ॥ ४१ ॥
जडश्चेति अहंकारश्चैतन्याध्यासवान् ध्रुवम् ।
अन्यवस्त्वन्तराध्यासादात्मान्यत्वेन भासते ॥ ४२ ॥
इदमंशो द्विधाभूतस्तत्र प्राणः क्रियाश्रयः ।
ज्ञानाधारोऽपरोबुद्धिर्मन इत्यंश ईरितः ॥ ४३ ॥
तस्य चेष्टादयोपीष्टाः प्राणाद्याः पञ्चवायवः ।
करणाद्याः क्रियाभेद वागादिद्वारकास्तथा ॥ ४४ ॥
द्विधान्तः करणं बुद्धिमनः कार्यवशादिह ।
आत्मैव केवलः साक्षादहं बुद्धौ तु भाति चेत् ॥ ४५ ॥
कृशोऽस्मीतिमतौ भाति केवलो नेति तद्वद ।
कृशादयोऽत्र दृश्यत्वान्नात्मधर्मा यथा मताः ॥ ४६ ॥
सुखादयोऽपि देहस्था नात्मधर्मास्तथैव च ।
मातृमानप्रमेयोभ्यो भिन्न आत्मात्मविन्मते ॥ ४७ ॥
तथैव चोपपाद्यस्त्यान्निरस्य परवादिनः ।
अनात्मा विषयश्चेति प्रतिपाद्यो न कस्यचित् ॥ ४८ ॥
घटोऽहमिति कस्यापि प्रतिपत्तेरभावतः ।
रूपादिमत्त्वाद्दृश्यत्वाज्जडत्वाद्भौतिकत्वतः ॥ ४९ ॥
अन्नवस्त्रादनीयत्वात्कुड्यवादेर्नात्मा कलेवरम् ।
देहतो व्यतिरेकेण चैतन्यस्य प्रकाशनात् ॥ ५० ॥

अतस्त्वन्नमयो देहो नात्मा लोकायतेरितः ।
प्राणोऽप्यात्मा न वायुत्वाज्जडत्वाद्बाह्यवायुवत् ॥ ५१ ॥
इन्द्रियाणि न चात्मा स्यात् करणत्वात्प्रदीपवत् ।
चञ्चलत्वान्मनो नात्मा सुषुप्तौ तदसम्भवात् ॥ ५२ ॥
सुखे पर्यवसानाच्च सुखमेवात्मविग्रहः ।
धत्तेऽन्नमयमात्मानं प्राणः प्राणं मनो मनः ॥ ५३ ॥
सच्चिदानन्दगोविन्दपरमात्मा वहत्यसौ ।
यदा बाह्येन्द्रियैरात्मा भुङ्क्तेऽर्थान् स्वपराङ्मुखान् ॥५४॥
तदा जाग्रदवस्था स्यादात्मनो विश्वसंज्ञिता ।
बाह्येन्द्रियगृहीतार्थान् मनोमात्रेण वै यदा ॥ ५५ ॥
भुङ्क्ते स्वप्नांस्तदा ज्ञेया तैजसाख्या परात्मनः ।
अविद्यातिमिरग्रस्तमनस्यात्मन्यवस्थिते ॥ ५६ ॥
सुषुप्त्यवस्था विज्ञेया प्राज्ञाख्यानन्दसंज्ञिता ।
स्वापेऽपि तिष्ठति प्राणो मृतभ्रान्तिनिवृत्तये ॥ ५७ ॥
अन्यथा श्वादयोऽश्नन्ति संस्करिष्यन्ति वानले ।
स्वापेऽप्यानन्दसद्भावो भवत्येवोत्थितो यतः ॥ ५८ ॥
सुखमस्वाप्समित्येवं परामृशति वै स्मरन् ।
स्यान्मतं विषयाभावान्न तद्विषयजं सुखम् ॥ ५९ ॥
वेद्यत्वान्न निजं तेन दुःखाभावे सुखभ्रमः ।
प्रतियोगिन्यदृष्टेऽपि सर्वाभावोऽपि गृह्यते ॥ ६० ॥
यतोऽन्यस्मै पुनः पृष्टः सर्वाभावं प्रभाषते ।
न्यायेनानेन भावानां ज्ञानाभावोऽनुभूयते ॥ ६१ ॥

अत्र ब्रूमस्समाधानं दुःखाभावो न गृह्यते ।
प्रबुद्धेनेति सुप्तस्य नाज्ञानं प्रति साक्षिता ॥ ६२ ॥
प्रतियोग्यग्रहात्स्वापे दुःखस्य प्रतियोगिता ।
अभावाख्यं प्रमाणन्तु नास्ति प्राभाकरे मते ॥ ६३ ॥
नैयायिकमतेऽभावः प्रत्यक्षान्नातिरिच्यते ।
सुखदुःखादिनिर्मुक्ते मोक्षे पाषाणवत्स्थितम् ॥ ६४ ॥
आत्मानं प्रवदन्वादो मूर्खः किन्न वदत्यसौ ।
स्थितमज्ञानसाक्षित्वं नित्यानन्दत्वमात्मनः ॥ ६५ ॥
वदन्त्यत्रात्मनानात्वं देहेषु प्रतिवादिनः ।
एकश्चेत्सर्वभूतेषु पुंसि कस्मिन् मृते सति ॥ ६६ ॥
सर्वे म्रियेरन् जायेरन् जाते कुर्युश्च कुर्वति ।
एवंविरुद्धधर्मा हि दृश्यन्ते सर्वजन्तुषु ॥ ६७ ॥
अतस्सर्वशरीरेषु नानात्वं चात्मनां स्थितम् ।
विरुद्धधर्मदृष्ट्यैव पुंसां भेदस्त्वयेरितः ॥ ६८ ॥
विरुद्धधर्मा दृष्टाः क्व देहे वात्मनि वा वद ।
देहे चेद्देहनानात्वं सिद्धं किन्तेन चात्मनि ॥ ६९ ॥
चिद्रूपात्मनि भेदश्चेत्पुंस्येकस्मिन् प्रसज्यते ।
एकस्येन्दोरपां पात्रेष्वनेकत्वं यथा तथा ॥ ७० ॥
अनेकदेहेष्वेकात्मप्रतिभासस्तथा मतः ।
आत्मान्यः पञ्चकोशेभ्यः षड्भावेभ्यः षडूर्मितः ॥ ७१ ॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितः ।
एकस्सकलदेहेषु निर्विकारो निरञ्जनः ॥ ७२ ॥

नित्योऽकर्ता स्वयंज्योतिर्विभुर्भोगविवर्जितः ।
ब्रह्मात्मा निगु णश्शुद्धो बोधमात्रतनुस्स्वतः ॥ ७३ ॥
अविद्योपाधिकः कर्ता भोक्ता रागादिदूषितः ।
अहङ्कारादिदेहान्तःकलुषीकृतविग्रहः ॥ ७४ ॥
यथोपाधिपरिच्छिन्नो बन्धकाष्टकवेष्ठितः ।
ब्रह्मादिस्थावरान्तेषु भ्रमन् कर्मवशानुगः ॥ ७५ ॥
कर्मणा पितृलोकादि निषिद्धैर्नरकादिकम् ।
विद्यया ब्रह्मसायुज्यं तद्धीनः क्षुद्रतां गतः ॥ ७६ ॥
एक एव परो जीवः स्वकल्पितजगत्त्रयः ।
बन्धमुक्तादिभेदश्च स्वप्नवद्घटनामियात् ॥ ७७ ॥
अथवा बहवो जीवाः संसाराज्ञानभागिनः ।
अनादित्वादविद्याया अन्योन्याश्रयता न हि ॥ ७८ ॥
व्यष्टिदेहादिदं युक्तं द्वयमित्यपरं मतम् ।
समष्टिदृष्ट्या त्वेकत्वं व्यष्टिदृष्ट्या त्वनेकता ॥ ७९ ॥
साक्षी सद्वारनिर्द्वारसम्बन्धानां जडात्मनाम् ।
विज्ञानाज्ञानरूपेण सदा सर्वज्ञतां गतः ॥ ८० ॥
मायामात्रस्सुषुप्त्यादौ खचिताज्ञानकञ्चुकः ।
जन्मान्तरानुभूतानामपि संस्मरणक्षमः ॥ ८१ ॥
तत्प्रापकवशादत्र तारतम्यविशेषभाक् ।
अवस्थापञ्चकातीतः प्रमाता ब्रह्मविन्मतः ॥ ८२ ॥
प्रमासाधनमित्येव मानसामान्यलक्षणम् ।
तत्परिच्छेदभेदेन तदेवं द्विविधं मतम् ॥ ८३ ॥

निवर्तकमविद्याया इति वा मानलक्षणम् ।
सशेषाशेषभेदेन तदेवं द्विविधं मतम् ॥ ८४ ॥
तत्त्वमस्यादिवाक्योत्थमशेषाज्ञानबाधकम् ।
प्रत्यक्षमनुमानाख्यमुपमानन्तथागमः ॥ ८५ ॥
अर्थापत्तिरभावश्च प्रमाणानि षडेव हि ।
व्यावहारिकनामानि भवन्त्येतानि नात्मनि ॥ ८६ ॥
स्वसंवेद्योऽप्रमेयोऽपि लक्ष्यते वाङ्मनोऽतिगः ।
हिरण्यगर्भपक्षस्तु वेदान्तान्नातिभिद्यते ॥ ८७ ॥
आनन्दः पुरुषोऽज्ञानं प्रकृतिस्तन्मते मता ।
ज्ञानं द्विधा स्थितं प्रत्यक्परागिति हि भेदतः ॥ ८८ ॥
आनन्दाभिमुखं प्रत्यग्बाह्यार्थाभिमुखं पराक् ।
आत्माज्ञानविवर्तः स्याद्भूततन्मात्रपञ्चकम् ॥ ८९ ॥
तन्मात्रपञ्चकाज्जातमन्तःकरणपञ्चकम् ।
मनोबुद्धिरहङ्कारश्चित्तं ज्ञातृत्वमित्यपि ॥ ९० ॥
पार्थिवस्स्यादहङ्कारो ज्ञातृत्वमवकाशजम् ।
करणद्वयमेतत्तु कर्तृत्वेनावभासते ॥ ९१ ॥
बुद्धिः स्यात्तैजसी चित्तमाप्यं स्याद्वायुजं मनः ।
भूम्याद्येकैकभूतस्य विज्ञेयं गुणपञ्चकम् ॥ ९२ ॥
अहङ्कारो भुवः प्राणो घ्राणङ्गन्धश्च पायुना ।
चित्तापानौ तथा जिह्वा रसोपस्थावपाङ्गुणाः ॥ ९३ ॥
बुद्ध्युदानौ तथा चक्षू रूपपादास्तु तैजसाः ।
मनो वायोर्व्यानचर्मस्पर्शाः पाणिगुणास्तथा ॥ ९४ ॥

ज्ञातृत्वञ्च समानश्च श्रोत्रं शब्दश्च वाक् खजाः ।
एकैकसूक्ष्मभूतेभ्यः पञ्च पञ्चापरे गुणाः ॥ ९५ ॥
अस्थि चर्म तथा मांसं नाडीरोमाणि भूगुणाः ।
मूत्रं श्लेष्मा तथा रक्तं शुक्लं मज्जा त्वपाङ्गुणाः ॥ ९६ ॥
निद्रा तृष्णा क्षुधा ज्ञेया मैथुनालस्यमग्निजाः ।
प्रचालस्तरणारोहै वायोरुत्थानरोधने ॥ ९७ ॥
कामक्रोधौ लोभभये मोहो व्योमगुणास्तथा ।
उक्तोऽवधूतमार्गश्च कृष्णेनैवोद्धवं प्रति ॥ ९८ ॥
श्रीभागवतसंज्ञे तु पुराणे दृश्यते हि सः ।
सर्वदर्शनसिद्धान्तान्वेदान्तान्तानिमान् क्रमात् ।
श्रुत्वार्थविन्मुमुक्षुः सन् तत्त्वतः पण्डितो भुवि ॥ ९९ ॥

इति श्रीमच्छङ्कराचार्यविरचिते सर्वदर्शनसिद्धान्तसंग्रहे
वेदान्त पक्षो नाम द्वादशप्रकरणम् ॥

❀ इति सर्वदर्शनसिद्धान्तसंग्रहः समाप्तः ❀

